# श्रीराधिकाष्टोत्तरशतनामस्तोत्रम् (२)।

अवीक्ष्यात्मेश्वरीं काचिद् वृन्दावन-महेश्वरीम्।
तत्पदाम्भोजमात्रैक-गतिर्दास्यतिकातरा ॥ १ ॥

पतिता तत्सरस्तीरे रुदत्यार्तरवाकुलम्।
तच्छ्रीवक्त्रेक्षणावाप्त्यै नामान्येतानि संजगौ ॥ २ ॥

राधा गान्धर्विका गोष्ठ-युवराजैक-कामिता।
गान्धर्वा राधिका चन्द्रकान्तिर्माधवसङ्गिनी ॥ ३ ॥

दामोदराद्वैतसखी कार्तिकोत्कीर्तिदेश्वरी।
मुकुन्द-दयिता-वृन्द-धम्मिल्ल-मणिमञ्जरी ॥ ४ ॥

भास्करोपासिका वार्षभानवी वृषभानुजा।
अनङ्गमञ्जरी-ज्येष्ठा श्रीदामावरजोत्तमा ॥ ५ ॥

कीर्तिदा-कन्यका मातृस्नेह-पीयूष-पुत्रिका।
विशाखा-सवयाः प्रेष्ठविशाखा-जीविताधिका ॥ ६ ॥

प्राणाद्वितीय-ललिता वृन्दावन-विहारिणी।
ललिता-प्राणलक्षैक-रक्षा वृन्दावनेश्वरी ॥ ७ ॥

व्रजेन्द्र-गृहिणी-कृष्णप्राय-स्नेहनिकेतनम्।
व्रज-गो-गोप-गोपाली-जीवमात्रैक-जीवनम् ॥ ८ ॥

स्नेहलाभीर-राजेन्द्रा वत्सलाच्युत-पूर्वजा।
गोविन्द-प्रणयाधार-सुरभी-सेवनोत्सुका ॥ ९ ॥

धृत-नन्दीश्वरक्षेम-गमनोत्कण्ठि-मानसा।
स्वदेहाद्वैतता-दृष्ट-धनिष्ठा-ध्येयदर्शना ॥१०॥

गोपेन्द्र-महिषी-पाकशाला-वेदि-प्रकाशिका ।
आयुर्वर्धक-राद्धान्ना रोहिणी-घ्रात-मस्तका ॥११॥

सुबल-न्यस्त-सारूप्या सुबलप्रीति-तोषिता ।
मुखरा-दृक्सुधानप्त्री जटिला-दृष्टि-भीषिता ॥१२॥

मधुमङ्गल-नर्मोक्ति-जनित-स्मितचन्द्रिका ।
पौर्णमासी-बहिः-खेलत्-प्राणपञ्जर-सारिका ॥१३॥

स्वगणाद्वैत-जीवातुः स्वीयाहङ्कार-वर्धिनी ।
स्वगणोपेन्द्र-पादाब्ज-स्पर्श-लम्भन-हर्षिणी ॥१४॥

स्वीय-वृन्दावनोद्यान-पालिकी-कृतवृन्दका ।
ज्ञात-वृन्दाटवी-सर्व-लता-तरु-मृग-द्विजा ॥१५॥

ईशाच्चन्दन-संघृष्ट-नव-काश्मीर-देहभाः ।
जवापुष्प-प्रभाहारि-पट्ट-चीनारुणाम्बरा ॥१६॥

चरणाब्ज-तल-ज्योतिररुणीकृत-भूतला ।
हरिचित्त-चमत्कारि-चारु-नूपुर-निःस्वना ॥१७॥

कृष्ण-श्रान्तिहर-श्रोणिपीठ-वल्गित-घण्टिका ।
कृष्ण-सर्वस्व-पीनोद्यत्-कुचाञ्चन्मणिमालिका ॥१८॥

नाना-रत्नोल्लसच्छङ्खचूडा-चारु-भुजद्वया ।
स्यमन्तकमणि-भ्राजन्मणिबन्धाति-बन्धुरा ॥१९॥

सुवर्ण-दर्पण-ज्योतिरुल्लंघि-मुखमण्डला ।
पक्वदाडिम-बीजाभ-दन्ताकृष्टाघभिच्छुका ॥२०॥

अब्जरागादि-सृष्टाब्जकलिका-कर्णभूषणा ।
सौभाग्य-कज्जलाङ्काक्त-नेत्रनिन्दित-खञ्जना ॥२१॥

सुवृत्त–मौक्तिकामुक्ता–नासिका–तिलपुष्पिका ।
सुचारु–नव–कस्तूरी–तिलकाञ्चित–भालका ॥२२॥

दिव्यवेणी–विनिर्धूत–केकि–पिञ्छ–वरस्तुतिः ।
नेत्रान्तशर–विध्वंसीकृत–चाणूरजिद्‌धृतिः ॥२३॥

स्फुरत्–कैशोर–तारुण्य–सन्धि–बन्धुर–विग्रहा ।
माधवोल्लासकोन्मत्त–पिकोरु–मधुरस्वरा ॥२४॥

प्राणायुतशत–प्रेष्ठ–माधवोत्कीर्ति–लम्पटा ।
कृष्णापाङ्ग–तरङ्गोद्यत्–स्मित–पीयूषबुद्‌बुदा ॥२५॥

पुञ्जीभूत–जगल्लज्जा–वैदग्धी–दिग्ध–विग्रहा ।
करुणा–विद्रवद्देहा मूर्तिमन्माधुरी–घटा ॥२६॥

जगद्‌गुणवती–वर्ग–गीयमान–गुणोच्चया ।
शच्यादि–सुभगा–वृन्द–वन्द्यमानोरु–सौभगा ॥२७॥

वीणावादन–सङ्गीत–रास–लास्य–विशारदा ।
नारदप्रमुखोद्गीत–जगदानन्दि–सद्‌यशाः ॥२८॥

गोवर्धन–गुहागेह–गृहिणी कुञ्जमण्डना ।
चण्डांशु–नन्दिनी–बद्ध–भगिनी–भावविभ्रमा ॥२९॥

दिव्य–कुन्दलता–नर्मसख्यदाम–विभूषिता ।
गोवर्धनधराह्लादि–शृङ्गाररस–पण्डिता ॥३०॥

गिरीन्द्रधर–वक्षःश्रीः शंखचूडारि–जीवनम् ।
गोकुलेन्द्रसुत–प्रेम–काम–भूपेन्द्र–पत्तनम् ॥३१॥

वृषविध्वंस–नर्मोक्ति–स्वनिर्मित–सरोवरा ।
निजकुण्ड–जलक्रीडा–जित–सङ्कर्षणानुजा ॥३२॥

मुरमर्दन–मत्तेभ–विहारामृत–दीर्घिका ।
गिरीन्द्रधर–पारीन्द्र–रतियुद्धोरुसिंहिका ॥३३॥

स्वतनू–सौरभोन्मत्तीकृत–मोहन–माधवा ।
दोर्मूलोच्चालन–क्रीडा–व्याकुलीकृत–केशवा ॥३४॥

निजकुण्ड–तटी–कुञ्ज–क्लृप्त–केलिकलोद्यमा ।
दिव्य-मल्लिकुलोल्लासि-शय्या-कल्पित-विग्रहा ॥३५॥

कृष्ण–वामभुजा–न्यस्त–चारु–दक्षिणगण्डका ।
सव्यबाहुलता–बद्ध–कृष्ण–दक्षिणसद्भुजा ॥३६॥

कृष्ण–दक्षिणचारूरुश्लिष्ट–वामोरुरम्भिका ।
गिरीन्द्रधर–धृग्वक्षोमर्दि–सुस्तनपर्वता ॥३७॥

गोविन्दाधर–पीयूष–वासिताधर–पल्लवा ।
सुधासञ्चय–चारूक्ति–शीतलीकृत–माधवा ॥३८॥

गोविन्दोद्गीर्ण–ताम्बूलराग–रज्यत्–कपोलिका ।
कृष्णसम्भोग–सफलीकृत–मन्मथ–सम्भवा ॥३९॥

गोविन्द–मार्जितोद्दाम–रति–प्रस्विन्न–सन्मुखा ।
विशाखा–वीजित-क्रीडाशान्ति-निद्रालु-विग्रहा ॥४०॥

गोविन्द--चरण--न्यस्त--काय--मानस--जीवना ।
स्वप्राणार्बुद--निर्मञ्छ्य--हरिपाद--रजःकणा ॥४१॥

अणुमात्राच्युतादर्श--शप्यमानात्म--लोचना ।
नित्यनूतन--गोविन्द--वक्त्र--शुभ्रांशु--दर्शना ॥४२॥

निःसीम--हरिमाधुर्य--सौन्दर्याद्येकभोगिनी ।
सापत्न्यधाम--मुरलीमात्र--भाग्यकटाक्षिणी ॥४३॥

गाढ--बुद्धिबल--क्रीडा--जित--वंशी--विकर्षिणी ।
नर्मोक्ति-चन्द्रिकोत्फुल्ल-कृष्ण-कामाब्धिवर्धिनी ॥४४॥

व्रज--चन्द्रेन्द्रिय--ग्राम--विश्राम--विधुशालिका ।
कृष्ण--सर्वेन्द्रियोन्मादि--राधेत्यक्षर--युग्मका ॥४५॥

इदं श्रीराधिकानाम्नामष्टोत्तरशतोज्ज्वलम् ।
श्रीराधालम्भकं नाम स्तोत्रं चारु रसायनम् ॥४६॥

योऽधीते परमप्रीत्या दीनः कातरमानसः ।
स नाथामचिरेणैव सनाथामीक्षते ध्रुवम् ॥४७॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित—स्तवावल्यां
श्रीराधिकाष्टोत्तरशतनामस्तोत्रं (२) संपूर्णम् ।

# श्रीराधिकाष्टोत्तरशतनामस्तोत्रम् (३) ।

श्रीमद्राधा--रसमयी रसज्ञा रसिका तथा ।
रासेश्वरी रसभक्ती रसपूर्णा रसप्रदा ॥ १ ॥

रंगिणी रसलुब्धा च रासमण्डलकारिणी ।
रसविलासिनी राधा राधिका रसपूर्णदा ॥ २ ॥

रामारत्ना रत्नमयी रत्नमाला सुशोभना ।
रक्तोष्ठी रक्तनयना रक्तोत्पलविधारिणी ॥ ३ ॥

रमणी रामणी गोपी वृन्दावनविलासिनी ।
नानारत्ना विचित्राङ्गी नानासुखमयी सदा ॥ ४ ॥

संसारपारतरणी वेणुगीतविनोदिनी ।
कृष्णप्रिया कृष्णमयी कृष्णध्यानपरायणी ॥ ५ ॥

सदानन्दा क्षीणमध्या कृष्णा कृष्णालया शुभा ।
चन्द्रावली चन्द्रमुखी चन्द्रा च कृष्णवल्लभा ॥ ६ ॥

वृन्दावनेश्वरी देवी कृष्णारंगी परागतिः ।
ध्यानातीता ध्यानगम्या सदाकृष्णकुतूहली ॥ ७ ॥

प्रेममयी प्रेमरूपा प्रेमा प्रेमविनोदिनी ।
कृष्णप्रिया सदानन्दी गोपीमण्डलवासिनी ॥ ८ ॥

सुन्दरांगी च स्वर्णाभा नीलपट्टविधारिणी ।
कृष्णानुरागिणी चैव कृष्णप्रेमसुलक्षणा ॥ ९ ॥

निगूढरससारंगी मृगाक्षी मृगलोचना ।
अशेषगुणपारा च कृष्णप्राणेश्वरीसमा ॥१०॥

रासमण्डलमध्यस्था कृष्णरंगी सदा शुचिः ।
व्रजेश्वरी व्रजरूपा व्रजभूमिसुखप्रदा ॥११॥

रसोल्लासा मदोन्मत्ता ललिता रससुन्दरी ।
सर्वगोपीमयी नित्या नानाशास्त्रविशारदा ॥१२॥

कामेश्वरी कामरूपा सदा कृष्णपरायणा ।
पराशक्तिस्वरूपा च सृष्टिस्थितिविनाशिनी ॥१३॥

सौम्या सौम्यमयी राधा राधिका सर्वकामदा ।
गंगा च तुलसी चैव यमुना च सरस्वती ॥१४॥

भोगवती भगवती भगवच्चित्तरूपिणी ।
प्रेमभक्ति-सदासंगी प्रेमानन्दविलासिनी ॥१५॥

सदानन्दमयी नित्या नित्यधर्मपरायणी ।
त्रैलोक्याकर्षणी आद्या सुन्दरी कृष्णरूपिणी ॥१६॥

शतमष्टोत्तरं नाम यः पठेत् प्रयतः शुचिः ।
प्रातःकाले च मध्याह्ने सन्ध्यायां मध्यरात्रिके ।
यत्र तत्र भवेत्तस्य कृष्णः प्रेमयुतो भवेत् ॥१७॥

इति श्रीराधिकाष्टोत्तरशतनामस्तोत्रं (३) संपूर्णम् ।

# श्रीराधास्तोत्रम् (१) ।

गृहे राधा वने राधा राधा पृष्ठे पुरः स्थिता ।
यत्र यत्र स्थिता राधा राधैवाराध्यते मया ॥ १ ॥

जिह्वा राधा श्रुतौ राधा राधा नेत्रे हृदि स्थिता ।
सर्वाङ्गव्यापिनी राधा राधैवाराध्यते मया ॥ २ ॥

पूजा राधा जपो राधा राधिका चाभिवन्दने ।
स्मृतौ राधा शिरो राधा राधैवाराध्यते मया ॥ ३ ॥

गाने राधा गुणे राधा राधिका भोजने गतौ ।
रात्रौ राधा दिवा राधा राधैवाराध्यते मया ॥ ४ ॥

माधुर्ये मधुरा राधा महत्त्वे राधिका गुरुः ।
सौन्दर्ये सुन्दरी राधा राधैवाराध्यते मया ॥ ५ ॥

राधा रससुधासिन्धू राधा सौभाग्यमञ्जरी ।
राधा व्रजाङ्गनामुख्या राधैवाराध्यते मया ॥ ६ ॥

राधा पद्मानना पद्मा पद्मोद्भवसुपूजिता ।
पद्मेविवेचिता राधा राधैवाराध्यते मया ॥ ७ ॥

राधाकृष्णात्मिका नित्यं कृष्णो राधात्मको ध्रुवम् ।
वृन्दावनेश्वरी राधा राधैवाराध्यते मया ॥ ८ ॥

जिह्वाग्रे राधिकानाम नेत्राग्रे राधिकातनुः ।
कर्णे च राधिका-कीर्तिर्मानसे राधिका सदा ॥ ९ ॥

कृष्णेन पठितं स्तोत्रं राधिका-प्रीतये परम् ।
यः पठेत्प्रयतो नित्यं राधाकृष्णान्तिगो भवेत् ॥१०॥

आराधितमनाः कृष्णो राधाराधितमानसः ।
कृष्णाकृष्टमना राधा राधाकृष्णेति यः पठेत् ॥११॥

इति श्रीब्रह्मांडपुराणे ब्रह्मनारदसंवादे
श्रीराधास्तोत्रं (१) संपूर्णम् ।

# श्रीराधास्तोत्रम् (२) ।

राधे राधे च कृष्णेशे कृष्णप्राणमनोहरे ।
भक्तधामप्रदे देवि राधिके त्वं प्रसीद मे ॥ १ ॥

रहःकेलि सुखस्थाने सखीप्रेमकरेऽनघे ।
कृष्णोत्कर्षकरे नित्यं राधिके त्वं प्रसीद मे ॥ २ ॥

भक्तानानन्दसंदोहवर्धिनि ज्येष्ठचिन्तने ।
कोटिचन्द्रार्कसंहर्त्री राधिके त्वं प्रसीद मे ॥ ३ ॥

गौरांगि नीलांबरधरे कृष्णप्रेमाब्धि-धारिणि ।
पीतांबरप्रदे कृष्णे राधिके त्वं प्रसीद मे ॥ ४ ॥

किरीटकेयूरधरे नूपुराभातपादुके ।
बहुभूषणसंयुक्ते राधिके त्वं प्रसीद मे ॥ ५ ॥

इतिं गदितमनाद्यं राधिका स्तोत्रमाद्यम् ।
सुरनरगण मुख्यैर्नागगन्धर्वसाध्यैः ॥ ६ ॥

पठितमपि रहस्यं साधुभिश्चैकवारम् ।
नयति परमदिव्ये धाम्नि कृष्णः स्वभक्तान् ॥ ७ ॥

इति श्रीसनत्कुमार–संहितायाँ
श्रीराधास्तोत्रं (२) संपूर्णम् ।

# श्रीराधास्तोत्रम् (३) ।

वयं श्रीराधायाः पदकमलयुग्मं प्रतिदिनं
नमामः शुद्धयर्थं कलिकलुषलिप्तस्य मनसः ।
तथा प्रेम्णा यस्य प्रियसहचरीभिः प्रतिदिनं
कृता पूजा पुष्पैरपि च मुनिभिर्ध्यातमनिशम् ॥ १ ॥

वयं श्रीराधायाः करकमलयुग्मं प्रतिदिनं
स्मरामो भक्तेभ्यो वितरति मुहुर्यच्छमतुलम् ।
तथा श्रीकृष्णांसे विलसति सदा रासरसके
सखीवृन्दैर्यस्मिन्विरचितमहो चित्रकुलकम् ॥ २ ॥

मुखाब्जं राधायाः नयनपथमायातु लघु नः
सुनासं सुश्रोत्रं नयनकमलाभ्यामपि युतम् ।
सुकेशं यस्मिंश्च भ्रुकुटियुगलं चापसदृशं
तथेषद्धासाढ्यं विधिहरिहरैर्ध्यातमनिशम् ॥ ३ ॥

जपामो राधाया मुनिजनकुलैर्यत्सुजपितं
प्रियं दिव्यं शब्दं वयमनुदिनं नाम विमलम् ।
हरिस्तस्मै दत्ते लघु मुदितचेताः स्वभजनं
ह्यजस्रं यो राधां जपति मुदितः श्रीहरियुताम् ॥ ४ ॥

इति श्रीवनमालिदासशास्त्रिविरचितं श्रीराधास्तोत्रं (३) संपूर्णम् ।

# श्रीराधास्तोत्रम् (४) ।

जय जय वृषभानु–नन्दिनि रमणी–शिरोमणि राधिके ।
जय जय मोहन नागर–शेखर–मदनमोहन–मनोहारिके ॥ १ ॥

जय जय वृन्दाविपिन-विहारिणि श्यामसुन्दर-सुखदायिके ।
जय जय ललितादिक-वशवर्तिनि नन्दनन्दन-हृदिशायिके ॥ २ ॥

जय जय गोपीजन–रतिनायकालिंगन–सुख जीविके ।
जय जय प्रेमसुधामयि सुन्दरि पीताम्बरधर–सेविके ॥ ३ ॥

जय जय नीलाम्बरवरधारिणि व्रजपतिसुत–हृतवंशिके ।
जय जय शास्त्रागमान्तरवर्तिनि सिद्धसतीकुल–शंसिके ॥ ४ ॥

जय जय रासविनोदविमोहिनि रासेश्वरि रसवर्धिके ।
जय जय कान्त्यामृतमद–खंडिनि रूपवतीमद–मर्दिके ॥ ५ ॥

जय जय केशीनिसूदन–कर्षिणि भावविशेष–विभूषिके ।
जय जय पूर्णानन्द–मुकुटमणेर्बिम्बाधर–रस–पोषिके ॥ ६ ॥

जय जय गोकुलमंडन–मंडिनि अधरस्मित–शोभिके ।
जय जय दामोदर–संगानन्द–निरन्तर–लोभिके ॥ ७ ॥

जय जय जगदाह्लादक–हृदये संकीर्तनमिति भावके ।
सुजन कंठभूषणमिदं वर्णित–व्रजमोहन–दासके ॥ ८ ॥

इति श्रीराधास्तोत्रं (४) संपूर्णम् ।

# श्रीराधायाः सप्तत्रिंशनामस्तोत्रम् ।

राधा रासेश्वरी रम्या परमा च परात्मिका ।
रासोद्भवा कृष्णकान्ता कृष्णवक्षःस्थलस्थिता ॥ १ ॥

कृष्णप्राणाधिका देवी महाविष्णुप्रसूरपि ।
सर्वाद्या विष्णुमाया च सत्यासत्या सनातनी ॥ २ ॥

ब्रह्मस्वरूपा परमा निर्लिप्ता निर्गुणा परा ।
वृन्दावनेशा विजया यमुनातटवासिनी ॥ ३ ॥

गोपाङ्गनानां प्रथमा गोपीशा गोपमातृका ।
सानन्दा परमानन्दा नन्दनन्दन-कामिनी ॥ ४ ॥

वृषभानुसुता शान्ता कान्ता पूर्णतमस्य च ।
काम्या कलावतीकन्या तीर्थपूता सती शुभा ॥ ५ ॥

सप्तत्रिंशच्च नामानि वेदोक्तानि शुभानि च ।
सारभूतानि पुण्यानि सर्वनामसु नारद ॥ ६ ॥

यः पठेत् संयतः शुद्धो विष्णुभक्तो जितेन्द्रियः ।
इहैव निश्चलां लक्ष्मीं लब्ध्वा याति हरेः पदम् ।
हरिभक्तिं हरेर्दास्यं लभते नात्र संशयः ॥ ७ ॥

स्तोत्र-स्मरणमात्रेण जीवन्मुक्तो भवेन्नरः ।
पदे पदेऽश्वमेधस्य लभते निश्चितं फलम् ॥ ८ ॥

कोटिजन्मार्जितात् पापात् ब्रह्महत्या-शतादपि ।
स्तोत्र-स्मरणमात्रेण मुच्यते नात्र संशयः ॥ ९ ॥

इति श्रीनारदपञ्चरात्रे ज्ञानामृतसारे शिवनारदसंवादे
भक्तिज्ञानकथने सामवेदोक्तं
श्रीराधायाः सप्तत्रिंशनामस्तोत्रं संपूर्णम् ।

# श्रीराधिकानामावलीस्तोत्रम् ।

प्रणम्या श्रीमती राधा पूर्णब्रह्मसनातनी ।
श्रीराधा परमाराध्या विश्वाद्या विश्वपालिनी ॥ १ ॥

गोलोकवासिनी देवी वृषभानुकुमारिका ।
वृन्दावनेश्वरी गौरी ललिताकुलपद्मिनी ॥ २ ॥

विद्युद् गौरी सुवर्णाङ्गी नीलाम्बरी सुधामुखी ।
सिन्दूरबिन्दु-सौभाग्या कस्तूरीवरचित्रिता ॥ ३ ॥

इन्दीवर-विशालाक्षी नीलकमललोचनी ।
मधुरस्मेर-संभाषा बिंबाधरी विधुमुखी ॥ ४ ॥

सर्वाङ्गसुन्दरी राधा श्रीकृष्णाकर्षिणी शुभा ।
चन्दनचर्चिताङ्गी च तुलसीमञ्जरी-प्रिया ॥ ५ ॥

वक्षो-मणिमयहारा पीनोन्नत-पयोधरा ।
मणिमञ्जीरपादाब्जैरातुलश्रीपदद्वया ॥ ६ ॥

लीला-लावण्य-कल्याणी लीलागान-विनोदिनी ।
ध्याये त्वां भक्तिभावेन परमाराध्य-देवताम् ॥ ७ ॥

श्रीकृष्णवल्लभा राधा माधव-प्राणवल्लभा ।
श्रीकृष्णरमणी रामा गोविन्दहृदयङ्गमा ॥ ८ ॥

कृष्ण-आह्लादिनी राधा प्रधाना श्रेष्ठगोपिका ।
कृष्णप्रिया कृष्णकान्ता कृष्णसेवा-परायणा ॥ ९ ॥

कृष्ण-संजीवनी राधा कृष्णवक्षःस्थलस्थिता ।
श्रीकृष्णमहिषी पूर्णा श्रीकृष्णाङ्ग-प्रियङ्करी ॥१०॥

गोपालवल्लभा गोपी गोपाल-प्राणवल्लभा ।
गोपिका गोकुलेन्द्राणी गोप्रिया गोधनेश्वरी ॥११॥

कुंजविहारिणी धन्या वल्लवी व्रजवल्लभा ।
वृन्दावनवनानन्दा किशोरी रासमुन्दरी ॥१२॥

लीलावती रतिप्रीता रासकीर्तिः कलावती ।
चन्द्रावली महालक्ष्मीस्तुलसी केशवप्रिया ॥१३॥

विष्णुप्रिया महामाया योगशक्तिः प्रभावती ।
कल्याणी कमला लक्ष्मी रुक्मिणी रुक्मरूपिणी ॥१४॥

नवयौवन-संपन्ना नन्दनन्दनकामिनी ।
जांबवती जगन्माता सत्यभामा सरस्वती ॥१५॥

दयार्द्रसागरी देवी दारिद्र्य-दुर्गतिहरा ।
कृष्ण-संमोहिनी नित्या कृष्णानन्द-प्रवर्धिनी ॥१६॥

कृष्णानुरागिणी रम्या कृष्णप्रेमतरंगिणी ।
कृष्णप्रेमाब्धिमकरी कृष्णांगस्यार्धभागिनी ॥१७॥

कृष्णानन्दे सदानन्दा कृष्णकेलिविनोदिनी ।
कृष्ण-उन्मादिनी सिद्धा कृष्णप्रिया-शिरोमणिः ॥१८॥

कृष्णप्रेम्णा सदोन्मत्ता कृष्णसंग-विलासिनी ।
कारुण्यामृत-अंभोधिः कमला करुणामयी ॥१९॥

गोविन्दवल्लभा देवी गोपिका गुणसागरी ।
गंगा गीता गुणैः पूर्णा गायत्री ब्रह्मरूपिणी ॥२०॥

गीर्वाण-वंद्या गतिदा गुणाङ्गी गुणसागरी ।
चैतन्यव्यापिनी राधा चित्तचैतन्यकारिणी ॥२१॥

चन्द्रिकावरण-ज्योतिर्नखाढ्या पूर्णिमाशशी ।
जयङ्करी जगद्धात्री यशोदा जय-कारिणी ॥२२॥

जगन्नाथप्रिया राधा यावट-ग्रामवासिनी ।
ध्यानातीता ध्यानगम्या भक्तिधर्म-प्रपालिनी ॥२३॥

नवगोरोचनागौरी नीलकान्तमणि-प्रिया ।
नानारत्न-विचित्राङ्गी नित्यानन्दप्रदायिनी ॥२४॥

निधुवनवनानन्दी नित्यरास-विहारिणी ।
पूर्णानन्दमयी राधा प्रफुल्ल-पद्मलोचना ॥२५॥

प्रेमभक्तिप्रदा देवी पद्मांघ्रिः श्रीहरिप्रिया ।
एतानि राधानामानि यः पठेत् प्रयतः शुचिः ॥२६॥

कृष्णचन्द्रप्रियः सोऽपि भवेत् कृष्ण-परायणः ।
श्रीकृष्णाकर्षणी राधा श्रीराधा परमा मता ॥२७॥

इति श्रीराधिकानामावलीस्तोत्रं संपूर्णम् ।

# श्रीविशाखानन्ददाभिधस्तोत्रम् ।

भावनाम-गुणादीनामैक्यात् श्रीराधिकैव या ।
कृष्णेन्दोः प्रेयसी सा मे श्रीविशाखा प्रसीदतु ॥ १ ॥

जयति श्रीमती काचिद् वृन्दारण्यविहारिणी ।
विधातुस्तरुणीसृष्टिकौशलश्रीरिहोज्ज्वला ॥ २ ॥

छिन्नस्वर्ण–सद्दक्षाङ्गी　रक्तवस्त्रावगुण्ठिनी ।
निर्बन्धबद्धवेणीका　चारुकाश्मीर–चर्चिता ॥ ३ ॥

द्विकलेन्दु--ललाटोद्यत्--कस्तूरी--तिलकोज्ज्वला ।
स्फुट–कोकनदद्वन्द्व–बन्धुरीकृत–कर्णिका ॥ ४ ॥

विचित्रवर्णविन्यास–चित्रितीकृतविग्रहा ।
कृष्णचोरभयाच्चोली–गुप्तीकृतमणिस्तनी ॥ ५ ॥

हारमञ्जीरकेयूर–चूडानासाग्रमौक्तिकैः ।
मुद्रिकादिभिरन्यैश्च　भूषिता　भूषणोत्तमैः ॥ ६ ॥

सुदीप्तकज्जलोद्दीप्तनयनेन्दीवरद्वया ।
सौरभोज्ज्वलताम्बूल–मंजुल–श्रीमुखाम्बुजा ॥ ७ ॥

स्मितलेश--लसत्--पक्वचारु--बिम्बिफलाधरा ।
मधुरालापपीयूष–सञ्जीवित–सखीकुला ॥ ८ ॥

वृषभानुकुलोत्कीर्तिवर्धिका　भानुसेविका ।
कीर्तिदाखनिरत्नश्रीः श्रीजितश्रीः श्रियोज्ज्वला ॥ ९ ॥

अनङ्गमञ्जरीज्येष्ठा　श्रीदामानन्ददानुजा ।
मुखराद्दष्टिपीयूषवर्ति–नप्त्री　तदाश्रिता ॥१०॥

पौर्णमासी–बहिः–खेलत्–प्राणपञ्जर–शारिका ।
सुबल–प्रणयोल्लासा　तत्र　विन्यस्तभारका ॥११॥

व्रजेश्याः　कृष्णवत्प्रेमपात्री　तत्रातिभक्तिका ।
अम्बावात्सल्य–संसिक्ता　रोहिणीघ्रातमस्तका ॥१२॥

व्रजेन्द्रचरणांभोजेऽर्पितभक्ति–परंपरा ।
तस्यापि　प्रेमपात्रीयं　पितुर्भानोरिव　स्फुटम् ॥१३॥

गुरुबुद्धया　प्रलंबारौ　नतिं　दूरे　वितन्वती ।
वधूबुद्धयैव　तस्यापि　प्रेमभूमीह　ह्रीयुता ॥१४॥

ललिता--लालिता स्वीयप्राणोरु-ललितावृता ।
ललिता-प्राणरक्षैक-रक्षिता तद्वशात्मिका ॥१५॥

वृन्दाप्रसाधितोत्तुङ्गकुञ्जानङ्गवेश्मनि ।
कृष्णखण्डितमानत्वाल्ललिताभीतिकंपिनी ॥१६॥

विशाखानर्मसख्येन सुखिता तद्गतात्मिका ।
विशाखाप्राणदीपाली-निर्मञ्छ्य-नखचन्द्रिका ॥१७॥

सखीवर्गैक-जीवातु-स्मितकैरवकोरका ।
स्नेहफुल्लीकृत-स्वीयगणा गोविन्दवल्लभा ॥१८॥

वृन्दारण्य-महाराज्य-महासेक-महोज्ज्वला ।
गोष्ठ-सर्वजनाजीव्यवदना रदनोत्तमा ॥१९॥

ज्ञातवृन्दाटवी-सर्वलता-तरु-मृग-द्विजा ।
तदीय-सख्यसौरभ्य-सुरभीकृत-मानसा ॥२०॥

सर्वत्र कूर्वति स्नेहं स्निग्धप्रकृतिराभवम् ।
नाममात्र-जगच्चित्त-द्राविका दीनपालिका ॥२१॥

गोकुले कृष्णचन्द्रस्य सर्वापच्छान्तिपूर्वकम् ।
धीरलालित्यवृद्ध्यर्थं क्रियमाण-व्रतादिका ॥२२॥

गुरु-गो-विप्र-सत्काररता विनय-सन्नता ।
तदाशीः-शतं-वर्धिष्णु-सौभाग्यादि-गुणाञ्चिता ॥२३॥

आयुर्गो-श्री-यशो-दायि-पाका दुर्वाससो वरात् ।
अतः कुन्दलता-नीयमाना राज्ञ्याः समाज्ञया ॥२४॥

गोष्ठजीवातु-गोविन्दजीवातु-लपितामृता ।
निज-प्राणार्बुदश्रेणी-रक्ष्य-तत्-पादरेणुका ॥२५॥

कृष्णपादारविन्दोद्यन्मकरन्दमये मुदा ।
अरिष्टमर्दि-कासारे स्नात्री निर्बन्धतोऽन्वहम् ॥२६॥

निजकुण्डपुरस्तीरे रत्नस्थल्यामहर्निशम् ।
प्रेष्ठनर्मालिभिर्भङ्ग्या समं नर्म वितन्वती ॥२७॥

गोवर्धनगुहालक्ष्मीर्गोवर्धनविहारिणी ।
धृतगोवर्धनप्रेमा धृतगोवर्धनप्रिया ॥२८॥

गान्धर्वाद्भुतगान्धर्वा राधा बाधापहारिणी ।
चन्द्रकान्तिश्चलापाङ्गी राधिका बन्धु--राधिका ॥२९॥

गान्धर्विका स्वगन्धाति–सुगन्धीकृत–गोकुला ।
इति पञ्चभिराहूता नामभिर्गोकुले जनैः ॥३०॥

हरिणी हरिणीनेत्रा रङ्गिणी रङ्गिणीप्रिया ।
रङ्गिणीध्वनिनागच्छत्सुरङ्गध्वनि–हासिनी ॥३१॥

बद्धनन्दीश्वरोत्कण्ठा कान्तकृष्णैककांक्षया ।
नवानुराग–सम्बन्ध–मदिरोन्मत्तमानसा ॥३२॥

मदनोन्मादि–गोविन्दमकस्मात् प्रेक्ष्य हासिनी ।
लपन्ती रुदती कम्प्रा रुष्टा दष्टाधरातुरा ॥३३॥

विलोकयती गोविन्दे स्मित्वा चारुमुखाम्बुजम् ।
पुष्पाकृष्टिमिषादूर्ध्वे धृतदोर्मूलचालना ॥३४॥

समक्षमपि गोविन्दमविलोक्येव भावतः ।
दले विलिख्य तन्मूर्तिं पश्यन्ती तद्विलोकिताम् ॥३५॥

लीलया याचकं कृष्णमवधीर्यैव भामिनी ।
गिरीन्द्रगह्वरं भंग्या पश्यन्ति विकसद्दृशा ॥३६॥

सुबलस्कन्ध–विन्यस्त–बाहौ पश्यति माधवे ।
स्मेरा स्मेरारविन्देन तमालं ताडयन्त्यथ ॥३७॥

लीलया केलिपाथोजं स्मित्वा चुम्बित–माधवे ।
स्मित्वा भालात्तकस्तूरी–रसं घ्रातवती सकृत् ॥३८॥

महाभावोज्ज्वलच्चिन्ता–रत्नोद्भावित–विग्रहा ।
सखी–प्रणय–सद्‌गन्ध–वरोद्वर्तन–सुप्रभा ॥३९॥

कारुण्यामृतवीचीभिस्तारुण्यामृतधारया ।
लावण्यामृतवन्याभिः स्नपिता ग्लपितेन्दिरा ॥४०॥

ह्रीपट्टवस्त्र–गुप्ताङ्गी सौन्दर्यघुसृणार्चिता ।
श्यामलोज्ज्वल–कस्तूरी–विचित्रित–कलेवरा ॥४१॥

कंपाश्रु–पुलक–स्तंभ–स्वेद–गद्‌गद–रक्तता
उन्मादो जाड्यमित्येतै रत्नैर्नवभिरुत्तमैः ॥४२॥

क्लृप्तालंकृति–संश्लिष्टा गुणाली–पुष्पमालिनी ।
धीराधीरात्व–सद्वासः–पटवासैः परिष्कृता ॥४३॥

प्रच्छन्नमानधम्मिल्ला सौभाग्य–तिलकोज्ज्वला ।
कृष्णनामयशःश्राव–वतंसोल्लासि–कर्णिका ॥४४॥

रागताम्बूलरक्तौष्ठी प्रेमकौटिल्यकज्जला ।
नर्मभाषित--निस्यन्द--स्मितकर्पूरवासिता ॥४५॥

सौरभान्तःपुरे गर्वपर्यङ्कोपरि लीलया ।
निविष्टा प्रेमवैचित्त्य–विचलत्तरलाञ्चिता ॥४६॥

प्रणयक्रोध–सच्चोलीबन्ध–गुप्तीकृतस्तनी ।
सपत्नी–वक्त्रहृच्छोषि–यशःश्रीकच्छपीरवा ॥४७॥

मध्यतात्मसखीस्कन्ध–लीलान्यस्तकराम्बुजा ।
श्यामा श्यामस्मरामोदमधुली–परिवेषिका ॥४८॥

सुभगा--वल्गुविञ्झोली--मौलीभूषण--मञ्जरी ।
आवैकुण्ठमजाण्डालि--वतंसीकृत--सद्‌यशाः ॥४९॥

वैदग्ध्यैक--सुधासिन्धुश्चातुर्यैक--सुधापुरी ।
माधुर्यैक--सुधावल्ली गुणरत्नैक--पेटिका ॥५०॥

गोविन्दानङ्ग--राजीवे  भानुश्रीवार्षभानवी ।
कृष्णहृत्कुमुदोल्लासे  सुधाकरकरस्थितिः ॥५१॥

कृष्णमानसहंसस्य मानसी सरसी वरा ।
कृष्णचातक--जीवातु--नवांभोद--पयःस्रुतिः ॥५२॥

सिद्धाञ्जन--सुधावर्तिः  कृष्णलोचनयोर्द्वयोः ।
विलासश्रान्त--कृष्णाङ्गे वाताली माधवी मता ॥५३॥

मुकुन्द--मत्त--मातङ्गविहारापारदीर्घिका ।
कृष्णप्राण--महामीन--खेलनानन्दवारिधिः ॥५४॥

गिरीन्द्र धारि--रोलम्ब--रसाल--नव--मञ्जरी ।
कृष्णकोकिलसन्मोदि--मन्दारोद्यान--विस्तृतिः ॥५५॥

कृष्णकेलि--वराराम--विहाराद्भुत--कोकिला ।
नादाकृष्ट--बकद्वेषि--वीर--धीर--मनोमृगा ॥५६॥

प्रणयोद्रेक--सिद्धचेक--वशीकृत--धृताचला ।
माधवातिवशा लोके माधवी माधवप्रिया ॥५७॥

कृष्णमंजुल--तापिञ्छे  विलसत्स्वर्णयूथिका ।
गोविन्द--नव्यपाथोदे  स्थिरविद्युल्लताद्भुता ॥५८॥

ग्रीष्मे गोविन्द-सर्वाङ्गे चन्द्र-चन्दन--चन्द्रिका ।
शीते  श्यामशुभांगेषु  पीतपट्ट--लसत्पटी ॥५९॥

मधौ  कृष्णतरूल्लासे  मधुश्रीर्मधुराकृतिः ।
मंजु--मल्लाररागश्रीः प्रावृषि श्यामहर्षिणी ॥६०॥

ऋतौ शरदि रासैक--रसिकेन्द्रमिह स्फुटम् ।
वरीतुं हन्त रासश्रीर्विहरन्ती सखीश्रिता ॥६१॥

हेमन्ते  स्मरयुद्धार्थमटन्तं  राजनन्दनम् ।
पौरुषेण  पराजेतुं  जयश्रीमूर्तिधारिणी ॥६२॥

सवतः सकल--स्तव्य--वस्तुतो यत्नतश्चिरात् ।
सारानाकृष्य तैर्युक्त्या निर्मायाद्भुतशोभया ॥६३॥

स्वश्लाघां कुर्वता फुल्लविधिना श्लाघिता मुहुः ।
गौरी–श्री–मृग्यसौन्दर्य–वन्दितश्रीनखप्रभा ॥६४॥

शरत्सरोज--शुभ्रांशु--मणिदर्पण--मालया ।
निर्मञ्छितमुखांभोज--विलसत्--सुषमा--कणा ॥६५॥

स्थायि--सञ्चारि–सूद्दीप्त–सात्त्विकैरनुभावकैः ।
विभावाद्यैर्विभावोऽपि स्वयं श्रीरसतां गता ॥६६॥

सौभाग्यदुन्दुभिप्रोद्यद्ध्वनि–कोलाहलैः सदा ।
वित्रस्तीकृत–गर्विष्ठ–विपक्षाखिल–गोपिका ॥६७॥

विपक्ष–लक्ष–हृत्कंप–संपादक–मुखश्रिया ।
वशीकृत–बकाराति–मानसा मदनालसा ॥६८॥

कन्दर्पकोटि–रम्य–श्रीजयि–श्रीगिरिधारिणा ।
चञ्चलापाङ्ग–भंगेन विस्मारित–सतीव्रता ॥६९॥

कृष्णेति–वर्ण–युग्मोरु–मोहमंत्रेण मोहिता ।
कृष्णदेह–वरामोद–हृद्य–मादन–मादिता ॥७०॥

कुटिल–भ्रूचलच्चण्ड–कन्दर्पोद्दण्ड–कार्मुके ।
न्यस्तापाङ्ग–शरक्षेपैर्विह्वलीकृत–माधवा ॥७१॥

निजाङ्ग–सौरभोद्गार–मादकौषधि–वात्यया ।
उन्मदीकृत–सर्वैक–मादक–प्रवराच्युता ॥७२॥

दैवाच्छ्रुतिपथायात–नाम–नीहार–वायुना ।
प्रोद्यद्रोमाञ्च–शीत्कार–कंपिकृष्ण–मनोहरा ॥७३॥

कृष्णनेत्र–लसज्जिह्वा–लेह्यवक्त्र–प्रभामृता ।
कृष्णान्य–तृष्णा–संहारी–सुधासारैक–झर्झरी ॥७४॥

रासलास्य-रसोल्लास-वशीकृत-बलानुजा ।
गानफुल्लीकृतोपेन्द्रा पिकोरु-मधुर-स्वरा ॥७५॥

कृष्णकेली-सुधासिन्धु-मकरी मकरध्वजम् ।
वर्धयन्ती स्फुटं तस्य नर्मास्फालन-खेलया ॥७६॥

गतिर्मत्तगजः कुंभौ कुचौ गन्धमदोद्धुरौ ।
मध्यमुद्दाम-सिंहोऽयं त्रिवल्यो दुर्गभित्तयः ॥७७॥

रोमाली नागपाशश्रीर्नितम्बो रथ उल्बणः ।
दन्ता दुर्दान्त-सामन्ताः पदांगुल्यः पदातयः ॥७८॥

पादौ पदातिकाध्यक्षौ पुलकाः पृथुकङ्कटाः ।
ऊरू जयमणिस्तंभौ बाहू पाशवरौ दृढौ ॥७९॥

भ्रूद्वन्द्वं कार्मुकं क्रूरं कटाक्षाः शाणिताः शराः ।
भालमर्धेन्दु-दिव्यास्त्रमंकुशानि नखांकुराः ॥८०॥

स्वर्णेन्दुफलकं वक्त्रं कृपाणी करयोर्द्युतिः ।
भल्लभाराः करांगुल्यो गण्डौ कनकदर्पणौ ॥८१॥

केशपाशः कटुक्रोधः कर्णौ मौर्वगुणोत्तमौ ।
बन्धू-काधररागोऽतिप्रतापः करकंपकः ॥८२॥

दुन्दुभ्यादिरवाश्चूडा-किङ्किणी-नूपुरस्वनाः ।
चिबुकं स्वस्तिकं शस्तं कण्ठः शंखो जयप्रदः ॥८३॥

परिष्वङ्गो हि विध्यस्त्रं सौरभं मादकौषधम् ।
वाणी मोहनमंत्रश्रीर्देहबुद्धि-विमोहिनी ॥८४॥

नाभी रत्नादि-भाण्डारं नासाश्रीः सकलोन्नता ।
स्मितलेशोऽप्यचिन्त्यादि-वशीकरणतंत्रकः ॥८५॥

अलकानां कुलं भीष्मं भृङ्गास्त्रं भङ्गदायकम् ।
मूर्तिः कन्दर्पयुद्धश्रीर्वेणी सञ्जयिनी ध्वजा ॥८६॥

इति ते कामसंग्राम-सामग्र्यो दुर्घटाः परैः ।
ईदृश्यो ललितादीनां सेनानीनां च राधिके ॥८७॥

अतो दर्पमदाद्यूयं दानीन्द्रमवधीर्य माम् ।
महामार-महाराज-नियुक्तं प्रथितं व्रजे ॥८८॥

सुष्ठु-सीमन्त-सिन्दूर-तिलकानां वरत्विषाम् ।
हाराङ्गदादिचोलीनां नासामौक्तिक-वाससाम् ॥८९॥

केयूर-मुद्रिकादीनां कज्जलोद्यद्वतंसयोः ।
एतावद्युद्ध-वस्तूनां पराध्यर्यानां पराध्यर्यतः ॥९०॥

तथा दध्यादि-गव्यानाममूल्यानां व्रजोद्भवात् ।
अदत्त्वा मे करं न्याय्यं खेलन्त्यो भ्रमतेह यत् ॥९१॥

ततो मया समं युद्धं कर्तुमिच्छत बुध्यते ।
किन्त्वेकोऽहं शतं यूयं कुरुध्वं क्रमशस्ततः ॥९२॥

प्रथमं ललितोच्चण्डा चरताच्चण्ड-सङ्गरम् ।
ततस्त्वं तदनु प्रेष्ठसङ्गराः सकलाः क्रमात् ॥९३॥

अथ चेन्मिलिताः कर्तुं कामयध्वे रणं मदात् ।
अग्रे सरत तद्दोर्भ्यां पिनष्मि सकलाः क्षणात् ॥९४॥

इति कृष्णवचः श्रुत्वा साटोपं नर्म-निर्मितम् ।
सानन्दं मदनाक्रान्तमानसालिकुलान्विता ॥९५॥

स्मित्वा नेत्रान्तवाणैस्तं स्तब्धीकृत्य मदोद्धतम् ।
गच्छन्ती हंसवद्भङ्ग्या स्मित्वा तेन धृताञ्चला ॥९६॥

लीलयाञ्चलमाकृष्य चलन्ती चारु हेलया ।
पुरो रुद्धपथं तन्तु पश्यन्ती रुष्टया दृशा ॥९७॥

मानसस्वर्धुनीं तूर्णमुत्तरीतुं तरिं श्रिता ।
कंपितायां तरौ भीत्या स्तुवन्ती कृष्णनाविकम् ॥९८॥

निजकुण्डपयःकेली–लीला–निर्जितमच्युतम् ।
हसितुं युञ्जती भंग्या स्मेरा स्मेरमुखीः सखीः ॥९९॥

माकन्द–मुकुल–स्यन्दि–मरन्द–स्यन्दि–मन्दिरे ।
केलितल्पे मुकुन्देन कुन्दवृन्देन मण्डिता ॥१००॥

नाना–पुष्प-मणिव्रात-पिञ्छ-गुञ्जा-फलादिभिः ।
कृष्णगुंफित–धम्मिल्लोत्फुल्ल–रोमस्मरांकुरा ॥१०१॥

मंजु–कुंजे मुकुन्दस्य कुचौ चित्रयतः करम् ।
क्षपयन्ती कुचाक्षेपैः सुसख्यमधुनोन्मदा ॥१०२॥

विलासे यत्नतः कृष्णदत्तं ताम्बूलचर्वितम् ।
स्मित्वा वाम्यादगृह्णाना तत्रारोपित–दूषणम् ॥१०३॥

द्यूते पणीकृतां वंशीं जित्वा कृष्णसुगोपिताम् ।
हसित्वाच्छिद्य गृह्णाना स्तुता स्मेरालि-सञ्चयैः ॥१०४॥

विशाखा–गूढ–नर्मोक्ति-जित-कृष्णार्पित-स्मिता ।
नर्माध्याय–वराचार्या भारती–जयि–वाग्मिता ॥१०५॥

विशाखाग्रे रहःकेली–कथोद्घाटकमाधवम् ।
ताडयन्ती द्विरब्जेन सभ्रूभंगेन लीलया ॥१०६॥

ललितादि–पुरः साक्षात् कृष्णसंभोगलाञ्छने ।
सूच्यमाने दृशा दूत्या स्मित्वा हुंकुर्वती रुषा ॥१०७॥

क्वचित् प्रणयमानेन स्मितमावृत्य मौनिनी ।
भीत्या स्मारशरैर्भंग्यालिङ्गन्ती सस्मितं हरिम् ॥१०८॥

कुपितं कौतुकैः कृष्णं विहारे बाढ–मौनिनम् ।
कातरा परिरभ्याशु मानयन्ती स्मिताननम् ॥१०९॥

मिथः प्रणयमानेन मौनिनी मौनिनं हरिम् ।
निर्मौना स्मरमित्रेण निर्मौनं वीक्ष्य सस्मिता ॥११०॥

क्वचित् पथि मिलच्चन्द्रावलीसंभोगदूषणम् ।
श्रुत्वा क्रूरसखी-वक्त्रान्मुकुन्दे मानिनी रुषा ॥ १११ ॥

पाद-लाक्षारसोल्लासि-शिरस्कं कंसविद्विषम् ।
कृतकाकुशतं साम्रा पश्यन्तीषच्चलद्दृशा ॥ ११२ ॥

क्वचित् कलिन्दजा-तीरे पुष्पत्रोटन-खेलया ।
विहरन्ती मुकुन्देन सार्धमालीकुलावृता ॥ ११३ ॥

तत्र पुष्पकृते कोपाद्व्रजन्ती प्रेमकारितात् ।
व्याघोटिता मुकुन्देन स्मित्वा धृत्वा पटाञ्चलम् ॥ ११४ ॥

विहार-श्रान्तितः कान्तं ललितान्यस्तमस्तकम् ।
वीजयन्ती स्वयं प्रेम्णा कृष्णं रक्तपटाञ्चलैः ॥ ११५ ॥

पुष्पकल्पित-दोलायां कलगान-कुतूहलैः ।
प्रेम्णा प्रेष्ठसखीवर्गैर्दोलिता हरिभूषिता ॥ ११६ ॥

कुण्ड-कुञ्जाङ्गने वल्गु गायदालीगणान्विता ।
वीणानन्दित-गोविन्द-दत्त-चुम्बेन लज्जिता ॥ ११७ ॥

गोविन्दवदनांभोजे स्मित्वा ताम्बूल-वीटिकाम् ।
युञ्जतीह मिथो नर्मकेलि-कर्पूरवासिताम् ॥ ११८ ॥

गिरीन्द्रगह्वरे तल्पे गोविन्दोरसि सालसम् ।
शयाना ललितावीज्यमाना स्वीय-पटाञ्चलैः ॥ ११९ ॥

अपूर्वबन्ध-गान्धर्व-कलयोन्माद्य माधवम् ।
स्मित्वा हारित-तद्वेणुहारा स्मेरविशाखया ॥ १२० ॥

वीणाध्वनिधुतोपेन्द्र-हस्ताच्च्योतित-वंशिका ।
चूडा-स्वान-हृत-श्याम--देह--गेह--पथ--स्मृतिः ॥ १२१ ॥

मुरली–गिलितोत्तुङ्ग–गृहधर्म–कुलस्थितिः ।
शृङ्गतो दत्त–तत्–सर्व–सतिलापोञ्जलित्रया ॥ १२२ ॥

कृष्णपुष्टिकरामोदि–सुधासाराधिकाधरा ।
स्वमाधुरीत्व–सम्पादि–कृष्णपादाम्बुजामृता ॥ १२३ ॥

राधेति निजनाम्नैव जगत्–ख्यापित–माधवा ।
माधवस्यैव राधेति ज्ञापितात्मा जगत्त्रये ॥ १२४ ॥

मृगनाभेः सुगन्धश्रीरिवेन्दोरिव चन्द्रिका ।
तरोः सुमञ्जरीवेह कृष्णस्याभिन्नतां गता ॥ १२५ ॥

रङ्गिणा सङ्गरंगेण सारङ्गरङ्गिणीकृता ।
सानङ्ग–रङ्गभंगेन सुरङ्गी–कृत–रङ्गदा ॥ १२६ ॥

इत्येतन्नाम–लीलाक्तपद्यैः पीयूषवर्षकैः ॥
तद्रसास्वाद–निष्णात–वासना–वासितान्तरैः ॥ १२७ ॥

गीयमानां जनैर्धन्यैः स्नेहविक्लिन्न–मानसैः ।
नत्वा तां कृपयाविष्टां दुष्टोऽपि निष्ठुरः शठः ॥ १२८ ॥

जनोऽयं याचते दुःखी रुदन्नुच्चैरिदं मुहुः ।
तत्पदांभोज–युग्मैक–गतिः कातरतां गतः ॥ १२९ ॥

कृत्वा निजगणस्यान्तः कारुण्यान्निजसेवने ।
नियोजयतु मां साक्षात् सेयं वृन्दावनेश्वरी ॥ १३० ॥

भजामि राधामरविन्दनेत्रां स्मरामि राधां मधुर–स्मितास्याम् ।
वदामि राधां करुणाभरार्द्रां ततो ममान्यास्ति गतिर्न कापि ॥१३१॥

लीलानामाङ्कित–स्तोत्रं विशाखानन्ददाभिधम् ।
यः पठेन्नियतं गोष्ठे वसेन्निर्भर–दीनधीः ॥ १३२ ॥

आत्मालंकृति--राधायां प्रीतिमुत्पाद्य मोदभाक् ।
नियोजयति तं कृष्णः साक्षात्तत्प्रियसेवने ॥ १३३ ॥

श्रीमद्रूपपदांभोज–धूलीमात्रैक–सेविना ।
केनचिद्ग्रथिता पद्यैर्मालाघ्रेया तदाश्रयैः ॥ १३४ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित–स्तवावल्यां
श्रीविशाखानन्ददाभिधस्तोत्रं संपूर्णम् ।

# श्रीराधिकास्तवराजः ।

ध्यात्वा वृन्दावने रम्ये यमुनातीरसंगतम् ।
कल्पवृक्षं समाश्रित्य तिष्ठंतं राधिकायुतम् ॥ १ ॥

ध्यायेत्ततः पठेदिमं स्तवराजं कृती पुमान् ।
यस्योच्चारणमात्रेण प्रसीदति वरेश्वरी ॥ २ ॥

धन्या नीलांबरी श्यामा गौरवर्णा वरांगना ।
वेदगुह्या गुणातीता राधा कृष्णसमन्विता ॥ ३ ॥

मोहनी सुन्दरी बाला रसरूपा हरिप्रिया ।
श्रीकृष्णवल्लभा राधा पुरुषोत्तमधीमता ॥ ४ ॥

तरुणी करुणा रक्ता अलंकार–जितोपमा ।
निर्भया कोमला सीता चन्द्रकोटिनिभानना ॥ ५ ॥

नूपुरासहिता पद्मा पादयुग्ममनूपमा ।
केलिगर्भसमाजंघा नितंबिनी मनोरमा ॥ ६ ॥

नीलांबरपरीधाना किंकिणीकटिमेखला ।
कृशोदरी चातिनम्रा गोपपत्नीनमस्कृता ॥ ७ ॥

त्रिवलीनाभिगंभीरा　पीनतुंगपयोधरा ।
कस्तूरीमलयालिप्ता　चर्चितावर्तुलस्तना ॥ ८ ॥

रत्नमुक्तामणिमालाकंचुकीपरिरंजिता ।
नानारत्नमयीग्रीवा　शोभिताव्रजमंडली ॥ ९ ॥

द्विभुजा सर्वदा शुभ्रा शीतला वरदा सदा ।
कमला अंगदा सौम्या कंकणैः परिसंगता ॥१०॥

मुद्रिकांगुलियुक्ता च　कोमलापादश्रीकरा ।
अमिता अमृता पुण्या किशोरी कमलानना ॥११॥

माधुरी सरसी वाचा बिंबोष्ठी कृष्णचुम्बिता ।
हसितालसिता नम्रा　नासामुक्तामनोहरा ॥१२॥

चंचला चपला स्नेहा　मदघूर्णितलोचना ।
स्वामिनी सुमुखी चन्द्रा भाले तिलकनिर्मिता ॥१३॥

सिन्दूरकुंकुमारंगा　बिन्दुकीपरिरंजिता ।
वनशोभाकरी धौता कर्णे　कनककुण्डली ॥१४॥

स्वर्णावरचितारत्ना　शिरोमणिविराजिता ।
श्रुतिमणिगणारामा　सुकेशीवेणिबन्धना ॥१५॥

सर्वाभरणशोभाढ्या　नानारत्नोपशोभिता ।
आपादकेशपर्यन्ता दृश्यती लज्जती रमा ॥१६॥

नेति नेति चतुर्वेदाः कुर्वन्ति　श्रुतिगोचरा ।
निजवनस्यमध्यस्था　राधिका　कृष्णतल्पगा ॥१७॥

पयःफेननिभारोप्या　कृष्णभोग्या　व्रजांगना ।
मैथुनीचातुरी　श्यामा　विपरीतरतिप्रदा ॥१८॥

दामिनी मेघसंयुक्ता प्रकाशाव्रजमंडली ।
श्रुता कृष्णयुताऽऽश्लिष्टा उदिताचन्द्रमंडली ॥१९॥

सुगन्धवासितादेहा सुरभिपुष्पसंयुता ।
लोपिताकुलमर्यादा रासकेलिपराक्रमा ॥२०॥

स्वप्नकामममहातेजा ब्रह्मरूपधरावरा ।
मन आकर्षणी भामा आनन्दा कृष्णसेविता ॥२१॥

स्वरूपा सुभगा गोप्या रासमंडलसंस्थिता ।
तेजस्विनी परा गौरी भामिनी भोगदायिका ॥२२॥

पुरीमार्गस्थिता नित्या पादांगुलिप्रकाशिका ।
तरुणी रूपसंपन्ना सुधासिन्धुरसायिनी ॥२३॥

गोपिका नायिका कन्या कौमारी नवयौवना ।
स्वरूपा हेमवर्णाभा व्रजभूषणभूषिता ॥२४॥

ऊर्जिता वेदमर्यादा निर्मला तनुगर्विता ।
आभीरनागरी कन्या कामिनी कृष्णयोषिता ॥२५॥

गतिस्तंभकरी रंभा आनन्दा रसदायिका ।
राधिका मुदिता ज्योत्स्ना कृष्णकेलिस्थिरासना ॥२६॥

बल्लवीवनितामुख्या गोपिका सुखदायिका ।
प्रणुता प्रेरिता रम्या रमिता गुणसागरा ॥२७॥

मातंगिनी महामंत्रमधुपानपरायणा ।
वृषभानुसुता राधा दयिता कृष्णजल्पिता ॥२८॥

अमोघा प्रियवादिन्यामंगला मंगलप्रिया ।
सुमहा सत्यवादिन्यासखीभिः परिवारिता ॥२९॥

कृष्ण-नाम-सदा-ध्येया कृष्ण-नाम-श्रुतारता ।
कृष्ण-नाम-सदा-वक्त्रा कृष्ण-नाम-हृदिस्थिता ॥३०॥

वनेचरो वरप्रदा मदपूर्णा सुवल्लभा ।
गेहिनी त्वरिता रम्या कृष्णयोग्या मनोरमा ॥३१॥

मनस्विनी कृपाकर्त्री कलगीतनिनर्तकी ।
वन्दिता स्तुविता नम्या पूजिता फलदेवता ॥३२॥

दध्योदनसुधाभोज्या कृष्णदर्शनलालसा ।
नवेदश्रुतिविज्ञेया ब्रह्मादिशक्रवांछिता ॥३३॥

परस्परकृतानन्दा कमला विस्मितानना ।
नखांकितकृतादेहा सावित्रीसंभ्रमोपमा ॥३४॥

अंगदा सुखदा सीमा हेमवल्ली वनोपमा ।
तांबूलचर्च्चिता रत्ना संपुटा सन्मुखोन्मुखा ॥३५॥

पठिताकृष्णसन्तुष्टा हसितावृषभानुजा ।
राधिका राधिता राधा राधिका कृष्ण-देवता ॥३६॥

इति श्रीगौतमीयतंत्रे श्रीकृष्णप्रोक्त
श्रीराधिकास्तवराजः संपूर्णः ।

# श्रीराधाकृपाकटाक्षस्तवराजः ।

शिव उवाच

मुनीन्द्रवृन्दवन्दिते त्रिलोकशोकहारिणि
प्रसन्नवक्त्रपंकजे निकुंज-भू-विलासिनि ।
व्रजेन्द्र-भानु-नन्दिनि व्रजेन्द्र-सूनु-संगते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ १ ॥

अशोक-वृक्ष--वल्लरी-वितान-मंडप-स्थिते
प्रवालवाल-पल्लव-प्रभाऽरुणांघ्रि-कोमले ।
वराभयस्फुरत्-करे प्रभूत-संपदालये
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ २ ॥

अनंग-रंग-मंगल-प्रसंग-भंगुरभ्रुवां
सविभ्रमं-समंभ्रमं दृगन्त-बाण-पातनैः ।
निरन्तरं वशीकृत-प्रतीति-नन्दनन्दने
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ३ ॥

तडित्-सुवर्ण-चंपक-प्रदीप्त-गौर-विग्रहे
मुखप्रभा-परास्त-कोटि-शारदेन्दुमंडले ।
विचित्र-चित्र-संचरच्चकोर-शावलोचने
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ४ ॥

मदोन्मदाति-यौवने प्रमोद-मान-मंडिते
प्रियानुराग-रंजिते कला-विलास-पंडिते ।
अनन्य-धन्य-कुंज-राज्य-काम-केलि-कोविदे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ५ ॥

अशेष-हाव-भाव-धीर-हीरहार-भूषिते
प्रभूतशातकुंभ-कुंभ-कुंभि कुंभ-सुस्तनि ।
प्रशस्त-मन्द-हास्य-चूर्ण-पूर्ण-सौख्यसागरे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ६ ॥

मृणाल-वाल-वल्लरी-तरंग-रंग-दोर्लते
लताग्र-लास्य-लोल नील-लोचनावलोकने ।
ललल्लुलन्मिलन्मनोज्ञ-मुग्ध-मोहनाश्रिते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ७ ॥

सुवर्णमालिकांचितत्रिरेख–कम्बु–कण्ठगे
त्रिसूत्र मंगलीगुण त्रिरत्न–दीप्ति दीधिति ।
सलोल–नीलकुन्तल–प्रसून–गुच्छ–गुंफिते
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ८ ॥

नितम्बबिम्ब–लंबमान–पुष्पमेखलागुणे
प्रशस्तरत्नकिंकिणी–कलाप–मध्य–मंजुले ।
करीन्द्रशुण्डदण्डिका–वरोहसौभगोरुके
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥ ९ ॥

अनेक–मंत्रनाद–मंजु–नूपुरारवस्खलत्
समाज–राजहंस–वंश–निक्वणातिगौरवे ।
विलोल–हेम–वल्लरी–विडंबिचारुचंक्रमे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥१०॥

अनन्त-कोटि-विष्णुलोक-नम्र-पद्मजार्चिते
हिमाद्रिजा–पुलोमजा–विरिंचजा–वरप्रदे ।
अपार–सिद्धि–ऋद्धि–दिग्ध सत्पदांगुलीनखे
कदा करिष्यसीह मां कृपाकटाक्षभाजनम् ॥११॥

मखेश्वरि क्रियेश्वरि स्वधेश्वरि सुरेश्वरि
त्रिवेद–भारतीश्वरि प्रमाण–शासनेश्वरि ।
रमेश्वरि क्षमेश्वरि प्रमोद–काननेश्वरि
व्रजेश्वरि व्रजाधिपे श्रीराधिके नमोऽस्तु ते ॥१२॥

इतीममद्भुतं स्तवं निशम्य भानुनन्दिनी ।
करोतु सन्ततं जनं कृपाकटाक्षभाजनम् ॥१३॥

भवेत्तदैव-संचित-त्रिरूप-कर्म-नाशनम्
भवेत्तदा-व्रजेन्द्र-सूनु-मंडल-प्रवेशनम् ॥१४॥

राकायां च सिताष्टम्यां दशम्यां च विशुद्धधीः ।
एकादश्यां त्रयोदश्यां यः पठेत्साधकः सुधीः ॥१५॥

यं यं कामयते कामं तं तं प्राप्नोति साधकः ।
राधाकृपाकटाक्षेण भक्तिः स्यात् प्रेमलक्षणा ॥१६॥

उरुदघ्ने नाभिदघ्ने हृद्दघ्ने कंठदघ्ने च ।
राधाकुंडजले स्थित्वा यः पठेत् साधकः शतम् ॥१७॥

तस्य सर्वार्थसिद्धिः स्यात् वाक्सामर्थ्यं ततो लभेत् ।
ऐश्वर्यं च लभेत्साक्षाद्दृशा पश्यति राधिकाम् ॥१८॥

तेन सा तत्क्षणादेव तुष्टा दत्तो महावरम् ।
येन पश्यति नेत्राभ्यां तत् प्रियं श्यामसुन्दरम् ॥१९॥

नित्यलीला-प्रवेशं च ददाति हि व्रजाधिपः ।
अतः परतरं प्रार्थ्यं वैष्णवानां न विद्यते ॥२०॥

( ध्यानम् )

श्यामां गोरोचनाभां स्फुरदसितपटप्राप्तिरम्यावगुण्ठां
रम्यां धन्यांस्व वेणीसुचिकुरनिकरालंबपादांकिशोरीम् ।
तर्जन्यंगुष्ठयुक्तं हरिमुखकुहरे युञ्जतीं नागवल्ली-
पर्णं कर्णायताक्षीं त्रिभुवनमधुरां राधिकां भावयामि ॥२१॥

इति ऊर्ध्वाम्नायतंत्रे शिवगौरीसंवादे
श्रीराधाकृपाकटाक्षस्तवराजः संपूर्णः ।

# श्रीराधिकायाः प्रेमाम्भोजमरन्दाख्यस्तवराजः ।

महाभावोज्ज्वलच्चिन्ता--रत्नोद्भावित--विग्रहाम् ।
सखीप्रणयसद्गन्ध--वरोद्वर्तन--सुप्रभाम् ॥ १ ॥

कारुण्यामृत--वीचिभिस्तारुण्यामृत--धारया ।
लावण्यामृत--वन्याभिः स्नपितां ग्लपितेन्दिराम् ॥ २ ॥

ह्रीपट्टवस्त्रगुप्ताङ्गीं सौन्दर्य--घुसृणाञ्चिताम् ।
श्यामलोज्ज्वलकस्तूरी--विचित्रित--कलेवराम् ॥ ३ ॥

कम्पाश्रु--पुलक--स्तम्भ--स्वेद--गद्गद--रक्तताः ।
उन्मादो जाड्यमित्येतै रत्नैर्नवभिरुत्तमैः ॥ ४ ॥

क्लृप्तालंकृति-संश्लिष्टां गुणाली-पुष्पमालिनीम् ।
धीराधीरात्व--सद्वास--पटवासैः परिष्कृताम् ॥ ५ ॥

प्रच्छन्न-मान-धम्मिल्लां सौभाग्य-तिलकोज्ज्वलाम् ।
कृष्णनाम--यशः--श्राव--वतंसोल्लासि--कर्णिकाम् ॥ ६ ॥

राग--ताम्बूल--रक्तौष्ठीं प्रेमकौटिल्य--कज्जलाम् ।
नर्मभाषित--निःस्यन्द--स्मित--कर्पूरवासिताम् ॥ ७ ॥

सौरभान्तःपुरे गर्व--पर्यङ्कोपरि लीलया ।
निविष्टां प्रेमवैचित्त्य--विचलत्तरलाञ्चिताम् ॥ ८ ॥

प्रणयक्रोध--सच्चोली--बन्ध--गुप्तीकृत--स्तनाम् ।
सपत्नीवक्त्र-हृच्छोषि-यशः-श्रीकच्छपीरवाम् ॥ ९ ॥

मध्यतात्मसखी-स्कन्ध-लीला-न्यस्त-कराम्बुजाम् ।
श्यामां श्याम-स्मरामोद-मधूली-परिवेशिकाम् ॥१०॥

त्वां नत्वा याचते धृत्वा तृणं दन्तैरयं जनः।
स्वदास्यामृतसेकेन जीवयामुं सुदुःखितम् ॥११॥

न मुञ्चेच्छरणायातमपि दुष्टं दयामयः।
अतो गान्धर्विके हा हा मुञ्चैनं नैव तादृशम् ॥१२॥

प्रेमाम्भोजमरन्दाख्यं स्तवराजमिमं जनः।
श्रीराधिका--कृपाहेतुं पठंस्तद्दास्यमाप्नुयात् ॥१३॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित—स्तवावल्यां
श्रीराधिकायाः प्रेमाम्भोजमरन्दाख्यस्तवराजः संपूर्णः।

# श्रीराधाप्रार्थना (१)।

कृपयति यदि राधा बाधिताशेषबाधा
किमपरमवशिष्टं पुष्टिमर्यादयोर्मे।
यदि वदति च किञ्चित् स्मेरहासोदितश्री-
र्द्विजवरमणिपंक्त्या मुक्तिशुक्त्या तदा किम् ॥ १ ॥

श्यामसुन्दर शिखण्डशेखर स्मेरहास मुरलीमनोहर।
राधिकारसिक मां कृपानिधे स्वप्रियाचरणकिंकरं कुरु ॥ २ ॥

प्राणनाथ वृषभानुनन्दिनी-श्रीमुखाब्ज-रसलोलषट्पद।
राधिकापदतले कृतस्थितिं त्वां भजामि रसिकेन्द्रशेखर॥ ३ ॥

संविधाय दशने तृणं विभो प्रार्थये व्रजमहेन्द्रनन्दन।
अस्तु मोहन तवातिवल्लभा जन्मजन्मनि मदीश्वरी प्रिया ॥ ४ ॥

इति श्रीराधाप्रार्थना (१) संपूर्णा।

# श्रीराधाप्रार्थना (२)।

शिखरिणी ।

शिवाद्या यत्पादांबुजनखमणिध्यानसलिला-
ऽण्डजस्वान्तायत्राऽनिशमपि समाधिस्थितिजुषः ।
स कृष्णोऽप्या यस्या गुणगणमहो गायति मुदा
सदा सा श्रीराधा हरतु भवबाधामहह नः ॥ १ ॥

अहो यस्यां साक्षादिह परमसारत्वमतितो
न जिह्वायाः स्पर्शं ह्यकृत मुनिचूडामणिरहो ।
महाभावव्रातद्रुतहृदि सुगोप्या मुनिपतेः
श्रियाः साऽऽख्याचिन्तामणिरु मम विश्राम्यतु हृदि ॥ २ ॥

अहो यस्याः प्रेमाऽतिशयरसमग्नो मुनिपति-
र्न जग्राहाऽप्याख्यां परममुदपारांबुधिमपि ।
कृपापारावाराऽऽप्लुतहृदयिकाऽऽराधितपदा
सदा सा श्रीराधा हरतु भवबाधामहह नः ॥ ३ ॥

रमाद्या यत्पादाऽद्भुतनखमणिभ्यः प्रकटिता
सुराधातापिन्यादिषु गदितमेवं स्फुटमहो ।
अपि स्वप्राणेशाऽद्भुतहृदयहाराऽद्भुतपदा
सदा सा श्रीराधा हरतु भवबाधामहह नः ॥ ४ ॥

इति श्रीराधाप्रार्थना (२) संपूर्णा ।

# श्रीप्रार्थनापद्धतिः ।

शुद्धगाङ्गेयगौराङ्गीं कुरङ्गीलङ्गिमेक्षणाम् ।
जितकोटीन्दुबिम्बास्यामम्बुदाम्बरसंवृताम् ॥ १ ॥

नवीनबल्लवीवृन्दधम्मिल्लोत्तंसमल्लिकाम् ।
दिव्यरत्नाद्यलङ्कारसेव्यमानतनुश्रियम् ॥ २ ॥

विदग्धमण्डलगुरुं गुणगौरवमण्डिताम् ।
अतिप्रेष्ठवयस्याभिरष्टाभिरभिवेष्टिताम् ॥ ३ ॥

चञ्चलापाङ्गभङ्गेन व्याकुलीकृतकेशवाम् ।
गोष्ठेन्द्रसुतजीवातुरम्यबिम्बाधरामृताम् ॥ ४ ॥

त्वामसौ याचते नत्वा विलुठन्यमुनातटे ।
काकुभिर्व्याकुलस्वान्तो जनो वृन्दावनेश्वरि ॥ ५ ॥

कृतागस्केऽप्ययोग्येऽपि जनेऽस्मिन्कुमतावपि ।
दास्यदानप्रदानस्य लवमप्युपपादय ॥ ६ ॥

युक्तस्त्वया जनो नैव दुःखितोऽयमुपेक्षितुम् ।
कृपाद्योतद्रवच्चित्तनवनीतासि यत्सदा ॥ ७ ॥

इति श्रीमद्रूपगोस्वामिविरचित–स्तवमालायां
श्रीप्रार्थनापद्धतिः संपूर्णा ।

# श्रीगीतावली ।

भैरवः ।

राधे ! जय जय माधवदयिते ! गोकुल–तरुणीमण्डल–महिते ।
दामोदर–रतिवर्धन–वेशे ! हरिनिष्कुट–वृन्दाविपिनेशे ! १॥

वृषभानूदधि–नवशशिलेखे ! ललितासखि ! गुणरमितविशाखे !
करुणां कुरु मयि करुणाभरिते ! सनकसनातन–वर्णितचरिते ! २॥

इति श्रीमद्रूपगोस्वामिविरचित–स्तवमालायां
श्रीगीतावली संपूर्णा ।

# श्रीउत्कण्ठादशकम् ।

छिन्न-स्वर्ण-विनिन्दि-चिक्कण-रुचिं स्मेरां वयःसन्धितो
रम्यां रक्त-सुचीन-पट्टवसनां वेशेन विभ्राजिताम् ।
उद्घूर्णच्छितिकण्ठ-पिञ्छ-विलसद्वेणीं मुकुन्दं मनाक्
पश्यन्तीं नयनाञ्चलेन मुदितां राधां कदाहं भजे ॥ १ ॥

यस्याः कान्त-तनूल्लसत्-परिमलेनाकृष्ट उच्चैः स्फुरद्-
गोपीवृन्द-मुखारविन्द-मधु तत् प्रीत्या धयन्नप्यदः ।
मुञ्चन् वर्त्मनि वंभ्रमीति मदतो गोविन्द-भृङ्गः सतां
वृन्दारण्य-वरेण्य-कल्पलतिकां राधां कदाहं भजे ॥ २ ॥

श्रीमत्कुण्ड-तटी-कुडुङ्ग-भवने क्रीडाकलानां गुरुं
तल्पे मञ्जुल-मल्लि-कोमलदलैः क्लृप्ते मुहुर्माधवम् ।
जित्वा मानिनमक्ष-सङ्गरविधौ स्मित्वा दृगन्तोत्सवै-
र्युञ्जानां हसितुं सखीः परमहो राधां कदाहं भजे ॥ ३ ॥

रासे प्रेमरसेन कृष्णविधुना सार्धं सखीभिर्वृतां
भावैरष्टभिरेव सात्त्विकतरैर्लास्यं रसैस्तन्वतीम् ।
वीणा-वेणु-मृदङ्ग-किङ्किणि-चलन्मञ्जीर-चूडोच्छलद्-
ध्वानैः स्फीत-सुगीत-मंजुनितरां राधां कदाहं भजे ॥ ४ ॥

उद्दाम-स्मरकेलि-सङ्गरभरे कामं वनान्तःस्थले
कृष्णेनाङ्कित-पीन-पर्वत-कुचद्वन्द्वां नखैरङ्ककैः ।
तद्दर्पेण तथा मदोद्धुरमहो तं विद्धमाकुर्वतीं
दूरे स्वालिकुलैः कृताशिषमहो राधां कदाहं भजे ॥ ५ ॥

मित्राणां निकरैर्वृतेन हरिणा स्वैरं गिरीन्द्रान्तिके
शुल्कादान-मिषेण वर्त्मनि हठाद्दम्भेन रुद्धाञ्चलाम् ।

साधं स्मेर-सखीभिरुद्धुर-गिरां भंग्या क्षिपन्तीं रुषा
भ्रूदर्पैर्विलसच्चकोर-नयनां राधां कदाहं भजे ॥ ६ ॥

पारावार-विहार-कौतुक-मनःपुरेण कंसारिणा
स्फारे मानसजाह्नवी-जलभरे तर्यां समुत्थापिताम् ।
जीर्णा नौर्मम चेत् स्खलेदिति मिषाच्छायाद्वितीयां मुदा
पारे खण्डित-कंचुलीं धृतकुचां राधां कदाहं भजे ॥ ७ ॥

उल्लासैर्जलकेलि-लोलुप-मनःपूरे निदाघोद्गमे
क्ष्वेली-लम्पटमानसाभिरभितः सायं सखीभिर्वृताम् ।
गोविन्दं सरसि प्रियेऽत्र सलिल-क्रीडा-विदग्धं कणैः
सिञ्चन्तीं जलयंत्रकेण पयसां राधां कदाहं भजे ॥ ८ ॥

वासन्ती-कुसुमोत्करेण परितः सौरभ्य-विस्तारिणा
स्वेनालंकृति-सञ्चयेन बहुधाविर्भावितेन स्फुटम् ।
सोत्कम्पं पुलकोद्गमैर्मुरभिदा द्राग्भूषिताङ्गीं क्रमै-
र्मोदेनाश्रुभरैः प्लुतां पुलकितां राधां कदाहं भजे ॥ ९ ॥

प्राणेभ्योऽप्यधिक-प्रिया मुररिपोर्या हन्त यस्या अपि
स्वीय-प्राण-परार्धतोऽपि दयितास्तत्पादरेणोः कणाः ।
धन्यां तां जगतीत्रये परिलसज्जंघाल-कीर्तिं हरेः
प्रेष्ठावर्ग-शिरोऽग्रभूषण-मणिं राधां कदाहं भजे ॥१०॥

उत्कण्ठादशक-स्तवेन नितरां नव्येन दिव्यैः स्वरै-
र्वृन्दारण्य-महेन्द्र-पट्टमहिषीं यः स्तौति सम्यक् सुधीः ।
तस्मै प्राणसमा-गुणानुरसनात् संजात-हर्षोत्सवैः
कृष्णोऽनर्घमभीष्टरत्नमचिरादेतत् स्फुटं यच्छति ॥११॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीउत्कण्ठादशकं संपूर्णम् ।

# श्रीराधारसमञ्जरी ।

कुचकलशभरार्ता केशरीक्षीणमध्या
विपुलतरनितम्बा पक्वबिम्बाधरोष्ठी ।
प्रणयमयिवयस्यास्कन्धविन्यस्तहस्ता
निधुवनरसपुञ्जं याति राधा निकुञ्जम् ॥ १ ॥

रमणिरमणखेलारम्भसम्भावनीया
रतिरभसगभीराऽभीरनारीषु धीरा ।
निकटविनयबद्धोद्भूतकांतप्रसादा
नरपतिवरपुत्री याति राधा निकुञ्जम् ॥ २ ॥

श्यामप्रेमविनोदिनी मधुरिमाधाराधरे स्मेरिणी
गौरी प्रेमवती शुभा च सुभगा प्रेमाब्धिसंवर्धिनी ।
गण्डे मण्डितकुण्डला कटितटे धत्ते मुदा किंकिणीं
लीला कांचनदेहिनी विजयते वृन्दावनस्थायिनी ॥ ३ ॥

शुद्धस्वर्णविडम्बिनी परिलसल्लावण्यसन्मोहिनी
नानारत्नविलासिनी मधुरिमाधाराधरे वंशिनी ।
कृष्णप्रेमतरंगिणी निरवधि प्रेमामृतालापिनी
श्यामप्रेमविनोदिनी विजयते राधा सुधादेहिनी ॥ ४ ॥

राधेयं नवयौवनाढ्यवयसोल्लासेन सानन्दिता
सुस्मेराधरबिम्बचन्द्रवदना हेमाद्रिकान्त्युज्ज्वला ।
नित्यं कल्पतरोस्तले निवसिता वेशेन भूषामयी
नानाशक्तिसमन्विता वितनुते प्रेमप्रवृत्तिं सदा ॥ ५ ॥

नानागीतविलासनृत्यरभसैरापूरितं दिङ्मुखं
गौरी चन्द्रमुखी सरोजनयनी कन्दर्पसम्मोहिनी ।

रम्भाचारुनितम्बिनी रसवती प्रेमामृतोद्गारिणी
राधा काञ्चनदेहिनी विजयते वृन्दावनस्थायिनी ॥ ६ ॥

वक्त्रे चन्द्रविलासिनी नयनयोः प्रेम्णा कृपापांगिणी
बिम्बोष्ठाधरदन्तपंक्तिविलसन्मुक्तावली चन्द्रिका ।
दोर्दण्डांघ्रिसमुल्लसत्पुलकिनी संन्यासविन्यासिनी
राधा काञ्चनदेहिनी विजयते कारुण्यकल्लोलिनी ॥ ७ ॥

या श्रीः सत्यवती स्वयं भगवती प्रेमानुसंवादिनी
या नित्या मधुभाषिणी सुखमयी सन्तोषरत्नाकरी ।
या राधा सुधियां सुधारसमयी कृष्णप्रिया दुर्लभा
सा जीयात् क्षितिमण्डले प्रियतमा वृन्दावनावासिनी ॥८॥

प्रेमोद्गारिदृगन्तवीक्षणलतामाजीरयन्तीं परां
नानाभावविकासिनीं सुमधुरां स्मेरातिकान्त्याननाम् ।
प्रोद्यत् प्रोद्युतिशातकुम्भलतिकादेहां मनोहारिणीं
श्रीमन्नागररासरत्नजलधिं श्रीराधिकामाश्रये ॥ ९ ॥

सेयं विभाति परिनिन्दितहेमकान्तिः
राधा विनिन्दितसुधामधुरैर्वचोभिः ।
प्रेम्णा वशेन गुरुणा नवरत्नवेशं
यत्किङ्किणी कटितटे परिरौति चित्रम् ॥१०॥

नवीना श्रीराधा नवरुचिरपूर्णेन्दुवदना
नवीनप्रेमाभिर्नवनवसखीभिः परिवृता ।
नवं वृन्दारण्यं नवकिशलयालम्बिततरुं
नवीनं रासार्थं व्रजति नवरंगे निधुवनम् ॥११॥

गौरी पद्ममुखी कुरंगनयनी क्षीणोदरी वत्सला
संगीतागमवेदिनी सुखमयी तुंगस्तनी कामिनी ।

श्यामप्रेमविनोदिनी मधुरिमाधाराधरे स्मेरिणी
त्रैलोक्यैकनितम्बिनी विजयते राधा सुधादेहिनी ॥१२॥

रासोल्लासविलासिनी नवलसत् संपूर्णचन्द्रानना
शुद्धस्वर्णविडम्बिकान्तिविलसत् वक्त्रेण व्याकुण्डला ।
लावण्यामृतमञ्जरी रसकलालोलाब्धिहिल्लोलिनी
राधा प्रेमविनोदिनी विजयते नित्यस्थलस्थायिनी ॥१३॥

उत्तुंगस्तनभारभंगुरतनू विद्युच्छटाकच्छविः
श्रोण्यां नीलदुकूलिनी मृदुपदाम्भोजे स्फुरन्नूपुरा ।
सुस्मेराधरचन्द्रकान्तिवदना कन्दर्पदर्पांकुरा
प्रेमान्धा मदमन्थरा विजयते कृष्णप्रिया राधिका ॥१४॥

उन्मीलन्नवयौवना मृदुतरोत्फुल्लाब्जसालंकृता
सुश्रोणीभरभंगुरा स्मरभरस्मेराधरा मेदुरा ।
लीलाकन्दुकवासिनी प्रियसखीस्कन्धस्फुरत्पालिका
श्यामा श्यामसुहृत्तमा विजयते प्राणाधिका राधिका ॥१५॥

वृन्दावनान्तरचरी सुरपुष्पगुच्छं
संभिन्दती मदनमोदितदीर्घनेत्रा ।
कर्णे रसालमुकुलं स्तबकं वहन्ती
श्यामाङ्गसङ्गमवती जयतीह राधा ॥१६॥

सैवेयं परिभाति चञ्चलरुचिं जित्वा जगन्मोहिनी
अत्यन्ताद्भुतसुन्दरी जितसुधावाक्यामृता राधिका ।
ईषद्धास्यमुखी कुरंगनयनी गौरी सुधासारिणी
प्रेमानन्दविलासिनी वितनुते प्रेमप्रवृत्तिं मुहुः ॥१७॥

श्रीराधा रतिभावमुग्धहृदया लोलायमानेक्षणा
पाणौ पुष्पधनुः स्रजं च दधती वृन्दावने क्रीडति ।

आश्चर्यैरभिचुम्बनै रतिकलालापैश्च सन्तर्पिता
गोविन्देन समं सखीगणवृता रासोत्सवं कुर्वती ॥१८॥

श्यामालिङ्गितगौरदेहलतया मेघस्थविद्युच्छविं
निन्दन्ती विकचाम्बुजद्वयरुचिं पद्भ्यां तिरस्कुर्वती ।
सर्वासां रतिकेलिवृन्दचतुरस्त्रीणां शिरोभूषणं
श्रीमन्नागररासरत्नजलधिं श्रीराधिकामाश्रये ॥१९॥

रासोल्लासविलासवल्गुरसिका सौन्दर्यसीमाश्रया
राधा प्रेममयी रतिं च कुरुते वृन्दावने सुन्दरी ।
श्रीकृष्णेन समं प्रफुल्लकुसुमैर्मत्तद्विरेफैर्युता
श्रीवृन्दावनदेवता विजयते राधा सुधामञ्जरी ॥२०॥

प्रेमानन्दविलासहासरसिका श्यामा सरोजेक्षणा
गोपीमण्डलमण्डिता वरतनुः सिन्दूरसीमन्तिनी ।
श्रीवृन्दावनरासकौतुककरा पीनस्तनोल्लासिनी
श्रीकृष्णस्य विनोदिनी विजयते श्रीराधिका भाविनी ॥२१॥

उत्तप्तहेमरुचिरा वृषभानुकन्या
आकर्णनेत्रयुगला धृतपद्महस्ता ।
स्वर्णादिभूषणयुता नवलोमराजी
संख्यासहस्रसखिभिर्जयतीह राधा ॥२२॥

तप्तकाञ्चनगौराङ्गीं राधां वृन्दावनेश्वरीम् ।
वृषभानुसुतां देवीं प्रणमामि हरिप्रियाम् ॥२३॥

राधायाः कलधौतगौरकिरणैर्वृन्दावनान्तर्गताः
कूजन्मत्तमयूरकोकिलगणा भृङ्गाः कुरङ्गाः शुकाः ।
कृष्णस्याद्भुतहासरासरसिका प्रोल्लासमुग्धाशया
सान्द्रानन्दरसाकरी स्मितमुखी श्रीकृष्णगौरेश्वरी ॥२४॥

गौरा भृङ्गकुरङ्गकोकिलगणाः गौराः शुकाःसारिकाः
गौराः सर्वमहीरुहाः वनचयाः गौराणि पुष्पाणि च ।
गौराश्चक्रकपोतबर्हिविहगाः गौरं च वृन्दावनं
राधादेहरुचाद्भुतं सखिवृतः श्यामोऽपि गौरो भवत् ॥२५॥

राधादेहसुचारुगौरकिरणैरापूरितं दिङ्मुखं
वृन्दारण्यविहारकल्पतरवः गौराङ्गवर्णावृताः ।
गौराः कोकिलभृङ्गकेकिगवयाः सानन्दवृन्दावनं
राधादेहरुचाद्भुतं सखिवृतः श्यामोऽपि गौरो भवत् ॥२६॥

मौलौ केकिशिखण्डिनी मधुरिमाधाराधरे स्मेरिणी
पीनांसे वनमालिनी हृदि लसत्कारुण्यकल्लोलिनी ।
श्रोण्यां पीतदुकूलिनी चरणयोर्मञ्जीरविन्यासिनी
लीला काञ्चनदेहिनी विजयते श्रीकृष्णसंजीवनी ॥२७॥

सौन्दर्योत्सवकेलिपौरुषरसं गायन्ति ताः सुस्वरं
वीणावेणुमृदङ्गतालमहतीं संवादयन्त्योऽपि च ।
राधा नृत्यति दक्षिणे रसवती चन्द्रावली वामतः
मध्ये श्यामलसुन्दरो रसकलामुद्दीपयन्नुत्तमाम् ॥२८॥

अङ्गे गौरसुचन्द्रिका सुचरिते लावण्यभंग्युत्सवा
श्यामप्रेमसुधानिलौ वयसि संतारुण्यलक्ष्मी स्वयम् ।
लावण्यैककला प्रमोहनपदं रूपं जगद्वैभवं
राधायाः समता न चास्ति निखिले ब्रह्मांडभाण्डे क्वचित्॥२९

लीलालोलतरङ्गिणी नयनयोरानन्दकल्लोलिनी
कन्दर्पोद्गमधारिणी रसवती काञ्चीरणन्नूपुरा ।
कृष्णासक्तविलोचना सपुलका प्रोद्यत्कुचा शोभिता
गोपालीगणसेविता विजयते राधा सुधावर्षिणी ॥३०॥

इति श्रीराधारसमञ्जरी संपूर्णा ।

# श्रीचाटुपुष्पाञ्जलिः ।

नव-गोरोचना-गौरीं प्रवरेन्दीवराम्बराम् ।
मणि-स्तबक-विद्योति-वेणीव्यालाङ्गना-फणाम् ॥ १ ॥

उपमान-घटामान-प्रहारि-मुखमण्डलाम् ।
नवेन्दु-निन्दि-भालोद्यत्-कस्तुरी-तिलक-श्रियम् ॥ २ ॥

भ्रूजितानङ्ग-कोदण्डां लोल-नीलालकावलिम् ।
कज्जलोज्ज्वलता-राजच्चकोरी-चारुलोचनाम् ॥ ३ ॥

तिलपुष्पाभ-नासाग्र-विराजद्वर-मौक्तिकाम् ।
अधरोद्धूत-बन्धूकां कुन्दाली-बन्धुर-द्विजाम् ॥ ४ ॥

सरत्न-स्वर्ण-राजीव-कर्णिका-कृत-कर्णिकाम् ।
कस्तूरी-बिन्दु-चिबुकां रत्न-ग्रैवेयकोज्ज्वलाम् ॥ ५

दिव्याङ्गद-परिष्वङ्ग-लसद्भुज-मृणालिकाम् ।
वलारि-रत्न-वलय-कलालम्बि-कलाविकाम् ॥ ६ ॥

रत्नांगुरीयकोल्लासि-वरांगुलि-कराम्बुजाम् ।
मनोहर-महाहार-विहारि-कुच-कुड्मलाम् ॥ ७ ॥

रोमालि-भुजगी-मूर्धरत्नाभ-तरलाञ्चिताम् ।
वलित्रयी-लताबद्ध-क्षीणभंगुर-मध्यमाम ॥ ८ ॥

मणि-सारसनाधार-विस्फार-श्रोणि-रोधसम् ।
हेमरम्भा-मदारम्भ-स्तम्भनोरु-युगाकृतिम् ॥ ९ ॥

जानु-द्युति-जित-क्षुल्ल-पीतरत्न-समुद्गकाम् ।
शरन्नीरज-नीराज्य-मञ्जीर-विरणत्-पदाम् ॥१०॥

राकेन्दु–कोटि–सौन्दर्य–जैत्र–पादनख–द्युतिम् ।
अष्टाभिः सात्त्विकैर्भावैराकुलीकृत–विग्रहाम् ॥११॥

मुकुन्दाङ्ग–कृतापाङ्गामनङ्गोर्मि–तरङ्गिताम् ।
त्वामारब्ध–श्रियानन्दां वन्दे वृन्दावनेश्वरि ॥१२॥

अयि प्रोद्यन्महाभाव–माधुरी–विह्वलान्तरे ।
अशेष–नायिकावस्था–प्राकट्याद्भुत–चेष्टिते ॥१३॥

सर्वमाधुर्य–विञ्छोली–निर्मञ्छित–पदाम्बुजे ।
इन्दिरा–मृग्य–सौन्दर्य–स्फुरदंघ्रि–नखाञ्चले ॥१४॥

गोकुलेन्दुमुखी–वृन्द–सीमन्तोत्तंस–मञ्जरि ।
ललितादि–सखीयूथ–जीवातु–स्मित–कोरके ॥१५॥

चटुलापाङ्ग–माधुर्य–बिन्दून्मादित–माधवे ।
तातपाद–यशःस्तोम–कैरवानन्द–चन्द्रिके ॥१६॥

अपार–करुणापूर–पूरितान्तर्मनोह्रदे ।
प्रसीदास्मिन् जने देवि निजदास्य–स्पृहांजुषि ॥१७॥

कच्चित्त्वं चाटुपटुना तेन गोष्ठेन्द्र–सूनुना ।
प्रार्थ्यमान–चलापाङ्ग–प्रसादा द्रक्ष्यसे मया ? १८॥

त्वां साधु माधवी–पुष्पैर्माधवेन कलाविदा ।
प्रसाध्यमानां स्विद्यन्तीं वीजयिष्याम्यहं कदा ? १९॥

केलि–विस्रंसिनो वक्र–केशवृन्दस्य सुन्दरि ।
संस्काराय कदा देवि जनमेतं निदेक्ष्यसि ? २०॥

कदा बिम्बोष्ठि ताम्बूलं मया तव मुखाम्बुजे ।
अर्प्यमाणं व्रजाधीश–सूनुराच्छिद्य भोक्ष्यते ? २१॥

व्रजराजकुमारवल्लभा--कुलसीमन्तमणि प्रसीद मे ।
परिवारगणस्य ते यथा पदवी मे न दवीयसी भवेत् ॥२२॥

करुणां मुहुरर्थये परं तव वृन्दावन-चक्रवर्तिनि ।
अपि केशिरिपोर्यया भवेत्स चटुप्रार्थनभाजनं जनः ॥२३॥

इमं वृन्दावनेश्वर्या जनो यः पठति स्तवम् ।
चाटुपुष्पाञ्जलिं नाम स स्यादस्याः कृपास्पदम् ॥२४॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीचाटुपुष्पाञ्जलिः संपूर्णः ।

# श्रीविलापकुसुमाञ्जलिः ।

त्वं रूपमञ्जरि सखि प्रथिता पुरेऽस्मिन्
पुंसः परस्य वदनं न हि पश्यसीति ।
बिम्बाधरे क्षतमनागतभर्तृकाया
यत्ते व्यधायि किमु तच्छुकपुंगवेन ? १ ॥

स्थलकमलिनि युक्तं गर्विता काननेऽस्मिन्
प्रणयसि वरहास्यं पुष्पगुच्छच्छलेन ।
अपि निखिल-लतास्ताः सौरभाक्ताः स मुञ्चन्
मृगयति तव मार्गं कृष्णभृंगो यदद्य ॥ २ ॥

व्रजेन्द्रवसतिस्थले विविधवल्लवीसंकुले
त्वमेव रतिमञ्जरि प्रचुरपुण्यपुञ्जोदया ।
विलासभरविस्मृतप्रणयिमेखलामार्गणे
यदद्य निजनाथया व्रजसि नाथिता कन्दरम् ॥ ३ ॥

प्रभुरपि यदुनन्दनो य एष प्रिययदुनन्दन उन्नतप्रभावः ।
स्वयमतुलकृपामृताभिषेकं मम कृतवांस्तमहं गुरुं प्रपद्ये ॥४॥

यो मां दुस्तरगेहनिर्जलमहाकूपादपारक्लमात्
सद्यः सान्द्रदयाम्बुधिः प्रकृतितः स्वैरी कृपारज्जुभिः ।
उद्धृत्यात्मसरोजनिन्दिचरणप्रान्तं प्रपाद्य स्वयं
श्रीदामोदरसाच्चकार तमहं चैतन्यचन्द्रं भजे ॥५॥

वैराग्ययुग्भक्तिरसं प्रयत्नैरपाययन्मामनभीप्सुमन्धम् ।
कृपाम्बुधिर्यः परदुःखदुःखी सनातनं तं प्रभुमाश्रयामि ॥६॥

अत्युत्कटेन नितरां विरहानलेन
दन्दह्यमानहृदया किल कापि दासी ।
हा स्वामिनि क्षणमिह प्रणयेन गाढ-
माक्रन्दनेन विधुरा विलपामि पद्यैः ॥ ७ ॥

देवि दुःखकुलसागरोदरे दूयमानमतिदुर्गतं जनम् ।
त्वं कृपाप्रबलनौकयाऽद्भुतं प्रापय स्वपदपंकजालयम् ॥ ८ ॥

त्वदलोकन-कालाहि-दंशैरेव मृतं जनम् ।
त्वत् पादाब्जमिलल्लाक्षाभेषजैर्देवि जीवय ॥ ९ ॥

देवि ते चरणपद्मदासिकां विप्रयोगभरदावपावकैः ।
दह्यमानतरकायवल्लरीं जीवय क्षणनिरीक्षणामृतैः ॥१०॥

स्वप्नेऽपि किं सुमुखि ते चरणाम्बुजात-
राजत्पराग-पटवास-विभूषणेन ।
शोभां परामतितरामहहोत्तमाङ्गं
बिभ्रद्भविष्यति कदा मम सार्थ-नाम ?११॥

अमृताब्धिरसप्रायैस्तव नूपुरशिञ्जितैः।
हा कदा मम कल्याणि बाधिर्यमपनेष्यते ?१२॥

शशकभृदभिसारे नेत्रभृङ्गाञ्चलाभ्यां
दिशि विदिशि भयेनोद्घूर्णिताभ्यां वनानि।
कुवलयदल-कोषाण्येव क्लृप्तानि याभ्यां
किमु किल कलनीयो देवि ताभ्यां जनोऽयम् ?१३॥

यदवधि मम काचिन्मञ्जरी रूपपूर्वा
व्रजभुवि बत नेत्रद्वन्द्व-दीप्तिं चकार।
तदवधि तव वृन्दारण्यराज्ञि प्रकामं
चरणकमल-लाक्षा-संदिदृक्षा ममाभूत्॥१४॥

यदा तव सरोवरं सरस-भृङ्गसंघोल्लसत्
सरोरुहकुलोज्ज्वलं मधुरवारि-सम्पूरितम्।
स्फुटत्सरसिजाक्षि हे नयनयुग्मसाक्षाद्बभौ
तदैव मम लालसाऽजनि तवैव दास्ये रसे॥१५॥

पादाब्जयोस्तव विना वर-दास्यमेव
नान्यत्कदापि समये किल देवि याचे।
सख्याय ते मम नमोऽस्तु नमोऽस्तु नित्यं
दास्याय ते मम रसोऽस्तु रसोऽस्तु सत्यम्॥१६॥

अति-सुललित-लाक्षाश्लिष्टसौभाग्यमुद्रा-
ततिभिरधिकतुष्ट्या चिह्निती-कृत्य बाहू।
नवदलित-हरिद्रा-गर्वगौरि प्रियां मे
चरणकमलसेवां हा कदा दास्यसि त्वम् ?१७॥

प्रणालीं कीलालैर्बहुभिरभि संक्षाल्य मधुरै-
र्मुदा संमार्ज्य स्वैर्विवृत-कचवृन्दैः प्रियतया।

कदा बाह्यागारं वरपरिमलैर्धूप-निवहै-
विधास्ये ते देवि प्रतिदिनमहो वासितमहम् ?१८।।

प्रातः सुधांशुमिलितां मृदमत्र यत्ना-
दाहृत्य वासित-पयश्च गृहान्तरे च ।
पादाम्बुजे बत कदा जलधारया ते
प्रक्षाल्य भाविनि कचैरिह मार्जयामि ?१९।।

प्रक्षाल्य पादकमलं कृतदन्तकाष्ठां
स्नानार्थमन्य-सदने भवतीं निविष्टाम् ।
अभ्यज्य गन्धिततरैरिह तैलपूरैः
प्रोद्वर्तयिष्यति कदा किमु किंकरीयम् ?२०।।

अयि विमलजलानां गन्धकर्पूरपुष्पै-
र्जितविधुमुखपद्मे वासितानां घटौघैः ।
प्रणय-ललित-सख्या दीयमानैः पुरस्ता-
त्तव वरमभिषेकं हा कदाहं करिष्ये ?२१।।

पानीयं चीनवस्त्रैः शशिमुखि शनकै रम्यमृद्वंगयष्टे-
र्यत्नादुत्सार्य मोदाद्दिशि दिशि विचलन्नेत्रमीनाञ्चलायाः
श्रोणौ रक्तं दुकूलं तदपरमतुलं चारुनीलं शिरोऽग्रात्
सर्वाङ्गेषु प्रमोदात् पुलकितवपुषा किं मया ते प्रयोज्यम् ?

प्रक्षाल्य पादकमलं तदनुक्रमेण
गोष्ठेन्द्रसूनुदयिते तव केशपाशम् ।
हा नर्मदाग्रथित-सुन्दर-सूक्ष्ममाल्यै-
र्वेणीं करिष्यति कदा प्रणयैर्जनोऽयम् ।।२३।।

सुभगमृगमदेनाखण्डशुभ्रांशुवत्तो
तिलकमिह ललाटे देवि मोदाद्विधाय ।

मसृण-घुसृण-चर्चामर्पयित्वा च गात्रे
स्तनयुगमपि गन्धैश्चित्रितं किं करिष्ये ?२४॥

सिन्दूररेखा सीमन्ते देवि रत्नशलाकया ।
मया या कल्पिता किं ते सालकाञ्छोभयिष्यति ?२५॥

हन्त देवि तिलकस्य समन्ताद्विन्दवोऽरुणसुगन्धिरसेन ।
कृष्णमादनमहौषधिमुख्या धीरहस्तमिह किं परिकल्प्याः ?२६॥

गोष्ठेन्द्रपुत्रमदचित्तकरीन्द्रराज-
बन्धाय पुष्पधनुषः किल बन्धरज्ज्वोः ।
किं कर्णयोस्तव वरोरु वरावतंस-
युग्मेन भूषणमहं सुखिता करिष्ये ?२७॥

या ते कञ्चुलिरत्र सुन्दरि मया वक्षोजयोरर्पिता
श्यामाच्छादनकाम्यया किल न साऽसत्येति विज्ञायताम् ।
किन्तु स्वामिनि कृष्ण एव सहसा तत्तामवाप्य स्वयं
प्राणेभ्योऽप्यधिकं स्वकं निधियुगं संगोपयत्येव हि ॥२८॥

नानामणि-प्रकरगुंफितचारु-पुष्टा
मुक्तास्रजस्तव सुवक्षसि हेमगौरि ।
श्रान्त्याभृतालस-मुकुन्द-सुतूलिकायां
किं कल्पयिष्यतितरां तव दासिकेयम् ?२९॥

मणिचय-खचिताभिर्नीलचूडावलीभि-
र्हरिदयित-कलाविद्द्वन्द्वमिन्दीवराक्षि ।
अपि बत तव दिव्यैरंगुलीरंगुलीयैः
क्वचिदपि किल काले भूषयिष्यामि किं नु ?३०॥

पादाम्भोजे मणिमयतुलाकोटियुग्मेन यत्ना-
दभ्यर्च्चे तद्दलकुलमपि प्रेष्ठपादांगुलीयैः ।

काञ्चीदाम्ना कटितटमिदं प्रेमपीठं सुनेत्रे
कंसारातेरतुलमचिरादर्चयिष्यामि किं ते ? ३१॥

ललिततर-मृणाली-कल्पबाहुद्वयं ते
मुरजयि-मति-हंसी-धैर्यविध्वंसदक्षम् ।
मणिकुल-रचिताभ्यामंगदाभ्यां पुरस्तात्
प्रमदभर-विनम्रा कल्पयिष्यामि किंवा ?३२॥

रासोत्सवे य इह गोकुलचन्द्रबाहु-
स्पर्शेन सौभगभरं नितरामवाप ।
ग्रैवेयकेण किमु तं तव कंठदेशं
संपूजयिष्यति पुनः सुभगे जनोऽयम् ?३३॥

दत्तः प्रलम्बरिपुणोद्भट-शंखचूड-
नाशात् प्रतोषि हृदयं मधुमंगलस्य ।
हस्तेन यः सुमुखि कौस्तुभमित्रमेतं
किं ते स्यमन्तकमणिं तरलं करिष्ये ?३४॥

प्रान्तद्वये परिविराजित-गुच्छयुग्म-
विभ्राजितेन नवकाञ्चन-डोरकेण ।
क्षीणं त्रुटत्यथ कृशोदरि चेदितीव
बध्नामि भोस्तव कदातिभयेन मध्यम् ?३५॥

कनकगुणितमुच्चैर्मौक्तिकं मत्करात्तो
तिलकुसुमविजेत्री नासिका सा सुवृत्तम् ।
मधुमथन-महालि-क्षोभकं हेमगौरि
प्रकटतरमरन्द-प्रायमादास्यते किम् ? ३६॥

अंगदेन तव वामदोः-स्थले स्वर्णगौरि नवरत्नमालिकाम् ।
पट्टगुच्छपरिशोभितामिमामाज्ञया परिणयामि ते कदा ?३७॥

कर्णयोरुपरि चक्रशलाके चञ्चलाक्षि निहिते मयका ते ।
क्षोभकं निखिलगोपवधूनां चक्रवद्भ्रमयतां मुरशत्रुम् ॥३८॥

कदा ते मृगशावाक्षि चिबुके मृगनाभिना ।
बिन्दुमुल्लासयिष्यामि मुकुन्दामोदमन्दिरे ?३९॥

दशनांस्ते कदा रक्तरेखाभिभूषयाम्यहम् ।
देवि मुक्ताफलानीह पद्मरागगुणैरिव ?४०॥

उत्खादिरेण नवचन्द्रविराजितेन
रागेण ते वर-सुधाधरबिम्बयुगे ।
गांगेयगात्रि मयका परिरञ्जितेऽस्मिन्
दंशं विधास्यति हठात् किमु कृष्णकीरः ?४१॥

यत्प्रान्तदेश-लवलेश-विघूर्णितेन
बद्धः क्षणाद्भवति कृष्णकरीन्द्र उच्चैः ।
तत्खञ्जरीट-जयिनेत्र-युगं कदायं
संपूजयिष्यति जनस्तव कज्जलेन ?४२॥

यस्यांकरञ्जित-शिरास्तव मानभंगे
गोष्ठेन्द्रसूनुरधिकां सुषमामुपैति ।
लाक्षारसः स च कदा पदयोरधस्ते
न्यस्तो मयाप्यतितरां छविमाप्स्यतीह ?४३॥

कलावति नतांसयोः प्रचुर-कामपुञ्जोज्ज्वलत्-
कलानिधि-मुरद्विषः प्रकटरास-सम्भावयोः ।
भ्रमद्भ्रमरझंकृतैर्मधुरमल्लिमालां मुदा
कदा तव तयोः समर्पयति देवि दासीजनः ?४४॥

सूर्याय सूर्यमणिनिर्मितवेदि–मध्ये
　मुग्धांगि भावत इहालिकुलैर्वृतायाः ।
अर्घं समर्पयितुमुत्कधियस्तवारात्
　सज्जानि किं सुमुखि दास्यति दासिकेयम् ?४५॥

व्रजपुरपतिराज्ञ्या आज्ञया मिष्टमन्नं
　बहुविधमतियत्नात् स्वेन पक्वं वरोरु ।
सपदि निजसखीनां मद्विधानाञ्च हस्तै–
　र्मधुमथन–निमित्तं किं त्वया सन्निधाप्यम् ?४६॥

नीतान्न–मद्विधललाटतटे ललाटं
　प्रीत्या प्रदाय मुदिता व्रजराजराज्ञी ।
प्रेम्णा प्रसूरिव भवत्कुशलस्य पृच्छां
　भव्ये विधास्यति कदा मयि तावकत्वात् ?४७॥

कृष्णवक्त्राम्बुजोच्छिष्टं प्रसादं परमादरात् ।
दत्तं धनिष्ठया देवि किमानेष्यामि तेऽग्रतः ?४८॥

नानाविधैरमृतसार–रसायनैस्तैः
　कृष्णप्रसादमिलितैरिह भोज्यपेयैः ।
हा कुंकुमांगि ललितादि–सखीवृता त्वं
　यत्नान्मया किमुतरामुपभोजनीया ?४९॥

पानाय वारि मधुरं नवपाटलादि–
　कर्पूर–वासिततरं तरलाक्षि दत्त्वा ।
काले कदा तव मयाऽऽचमनीय–दन्त–
　काष्ठादिकं प्रणयतः परमर्पणीयम् ?५०॥
　　　　　　　　　　युग्मकम् ॥

भोजनस्य समये तव यत्नाद्–
　देवि धूपनिवहान् वरगन्धान् ।

वीजनाद्यमपि तत्क्षणयोग्यं
हा कदा प्रणयतः प्रणयामि ?५१॥

कर्पूरपूरपरिपूरित-नागवल्ली-
पर्णादिपूगपरिकल्पित-वीटिकां ते ।
वक्त्राम्बुजे मधुरगात्रि मुदा कदाहं
प्रोत्फुल्ल-रोमनिकरैः परमर्पयामि ?५२॥

आरात्रिकेण भवतीं किमु देवि देवीं
निर्मञ्छयिष्यतितरां ललिता प्रमोदात् ।
अन्यालयश्च नवमंगलगानपुष्पैः
प्राणार्बुदैरपि कचैरपि दासिकेयम् ॥५३॥

आलीकुलेन ललिताप्रमुखेन सार्ध-
मातन्वती त्वमिह निर्भर-मर्मगोष्ठीम् ।
मत्पाणि-कल्पित-मनोहर-केलितल्प-
माभूषयिष्यसि कदा स्वपनेन देवि ?५४॥

संवाहयिष्यति पदौ तव किंकरीयं
हा रूपमञ्जरिरसौ च कराम्बुजे द्वे ।
यस्मिन्मनोज्ञहृदये सदयेऽनयोः किं
श्रीमान् भविष्यतितरां शुभवासरः सः ?५५॥

तवोद्गीर्णं भोज्यं सुमुखि किल कल्लोलसलिलं
तथा पादाम्भोजामृतमिह मया भक्तिलतया ।
अयि प्रेम्णा सार्धं प्रणयिजनवर्गैर्बहुविधै-
रहो लब्धव्यं किं प्रचुरतर-भाग्योदयबलैः ?५६॥

भोजनावसरे देवि स्नेहेन स्वमुखाम्बुजात् ।
मह्यं त्वद्गतचित्तायै किं सुधास्त्वं प्रदास्यसि ?५७॥

अपि बत रसवत्याः सिद्धये माधवस्य
व्रजपतिपुरमुद्यद्रोम-रोमा व्रजन्ती ।
स्खलित-गतिरुदञ्चत्स्वान्त-सौख्येन किं मे
क्वचिदपि नयनाभ्यां लप्स्यसे स्वामिनि त्वम् ?५८॥

पार्श्वद्वये ललितयाथ विशाखया च
त्वां सर्वतः परिजनैश्च परैः परीताम् ।
पश्चान्मया विभृत-भंगुर-मध्यभागां
किं रूपमञ्जरिरियं पथि नेष्यतीह ?५९॥

हम्बारवैरिह गवामपि बल्लवानां
कोलाहलैर्विविध-बन्दिकलावतां तैः ।
संभ्राजते प्रियतया व्रजराजसूनो-
र्गोवर्धनादपि गुरुर्व्रजवन्दितादूयः ॥६०॥

प्राप्तां निजप्रणयिनी-प्रकरैः परीतां
नन्दीश्वरं व्रजमहेन्द्र-महालयं तम् ।
दूरे निरीक्ष्य मुदिता त्वरितं धनिष्ठा
त्वामानयिष्यति कदा प्रणयैर्ममाग्रे ?६१॥
युग्मकम् ॥

प्रक्षाल्य पादकमले कुशले प्रविष्टा
नत्वा व्रजेशमहिषीप्रभृतीगुरूस्ताः ।
हा कुर्वती रसवतीं रसभाक् कदा त्वं
संमज्जयिष्यसितरां सुखसागरे माम् ?६२॥

माधवाय नतवक्त्रमादृता भोज्यपेय-रससञ्चयं क्रमात् ।
तन्वती त्वमिह रोहिणीकरे देवि फुल्लवदनं कदेक्ष्यसे ?६३॥

भोजने गुरुसभासु कथञ्चिन्माधवेन नतदृष्टि मुदोत्कम् ।
वीक्ष्यमाणमिह ते मुखपद्मं मोदयिष्यसि कदा मधुरे माम् ?६४॥

अयि विपिनमटन्तं सौरभेयीकुलानां
व्रजनृपतिकुमारं रक्षणे दीक्षितं तम् ।
विकलमति-जनन्या लाल्यमानं कदा त्वं
स्मितमधुरकपोलं वीक्ष्यसे वीक्ष्यमाणा ?६५॥

गोष्ठेशयाथ कुतुकाच्छपथादि-पूर्वं
सुस्निग्धया सुमुखि मातृपरार्धतोऽपि ।
हा ह्रीमति प्रियगणैः सह भोज्यमानां
किं त्वां निरीक्ष्य हृदये मुदमद्य लप्स्ये ?६६॥

आलिंगनेन शिरसः परिचुम्बनेन
स्नेहावलोकनभरेण च खञ्जनाक्षि ।
गोष्ठेशया नववधूमिव लाल्यमानां
त्वां प्रेक्ष्य किं हृदि महोत्सवमातनिष्ये ?६७॥

हा रूपमञ्जरि सखि प्रणयेन देवीं
त्वद्बाहुदत्त-भुजवल्लरिमायताक्षीम् ।
पश्चादहं कलित-कामतरंगरंगां
नेष्यामि किं हरिविभूषितकेलिकुञ्जम् ?६८॥

साकं त्वया सखि निकुंजगृहे सरस्याः
स्वस्यास्तटे कुसुमभावितभूषणेन ।
श्रृंगारितं विदधती प्रियमीश्वरी सा
हा हा भविष्यति मदीक्षणगोचरः किम् ?६९॥

श्रुत्वा विचक्षणमुखाद्व्रजराजसूनोः
शस्ताभिसार-समयं सुभगेऽत्र हृष्टा ।
सूक्ष्माम्बरैः कुसुम-संस्कृत-कर्णपूर-
हारादिभिश्च भवतीं किमलंकरिष्ये ?७०॥

नानापुष्पैः क्वणितमधुपैर्देवि संभाविताभि-
मालाभिस्तद्घुसृण-विलसत्काम-चित्रालिभिश्च ।
राजद्द्वारे सपदि मदनानन्ददाभिख्य-गेहे
मल्लीजालैः शशिमुखि कदा तल्पमाकल्पयामि ?७१॥

श्रीरूपमञ्जरि-करार्चित-पादपद्म-
गोष्ठेन्द्र-नन्दन-भुजार्पित-मस्तकायाः ।
हा मोदतः कनकगौरि पदारविन्द-
संवाहनानि शनकैस्तव किं करिष्ये ?७२॥

गोवर्धनाद्रिनिकटे मुकुटेन नर्म-
लीला-विदग्ध-शिरसां मधुसूदनेन ।
दानच्छलेन भवतीमवरुध्यमानां
द्रक्ष्यामि किं भ्रुकुटि-दर्पित-नेत्रयुग्माम् ?७३॥

तव तनुवरगन्धासंगि-वातेन चन्द्रा-
वलिकर-कृतमल्ली-केलितल्पाच्छलेन ।
मधुरमुखि मुकुन्दं कुण्डतीरे मिलन्तं
मधुपमिव कदाहं वीक्ष्य दर्पं करिष्ये ?७४॥

समन्तादुन्मत्त-भ्रमरकुलझंकारनिकरै-
र्लसत्-पद्मस्तोमैरपि विहगरावैरपि परम् ।
सखीवृन्दैः स्वीयैः सरसि मधुरे प्राणपतिना
कदा द्रक्ष्यामस्ते शशिमुखि नवं केलिनिवहम् ?७५॥

सरोवर-लसत्तटे मधुपगुञ्जिकुंजान्तरे
स्फुटत्कुसुमसंकुले विविध-पुष्पसंघैर्मुदा ।
अरिष्टजयिना कदा तव वरोरु भूषाविधि-
र्विधास्यत इह प्रियं मम सुखाब्धिमातन्वता ?७६॥

स्फीत-स्वान्तं कयाचित् सरभसमचिरेणार्प्यमाणैर्दरोद्य-
न्नाना-पुष्पोरुगुञ्जाफल-निकरलसत्केकिपिञ्छप्रपञ्चैः।
सोत्कम्पं रच्यमानः कृतरुचिहरिणोत्फुल्लमंगं वहन्त्याः
स्वामिन्याः केशपाशः किमु मम नयनानन्दमुच्चैर्विधाता ?७७॥

माधवं मदनकेलि-विभ्रमे मत्तया सरसिजेन भवत्या।
ताडितं सुमुखि वीक्ष्य किन्त्वियं गूढहास्यवदना भविष्यति ?७८॥

सुललितनिजबाह्वाश्लिष्ट–गोष्ठेन्द्रसूनोः
सुवलिततरबाह्वाश्लेष–दीव्यन्नतांसा।
मधुर–मदनगानं तन्वती तेन सार्धं
सुभगमुखि मुदं मे हा कदा दास्यसि त्वम् ?७९॥

जित्वा पाशकखेलायामाच्छिद्य मुरलीं हरेः।
क्षिप्तां मयि त्वया देवि गोपयिष्यामि तां कदा ?८०॥

अयि सुमुखि कदाहं मालतीकेलितल्पे
मधुर–मधुर–गोष्ठीं बिभ्रतीं वल्लभेन।
मनसिजसुखदेऽस्मिन्मन्दिरे स्मेरगण्डां
सपुलकतनुरेषा त्वां कदा वीजयामि ?८१॥

आयातोद्यत्कमलवदने हन्त लीलाभिसाराद्–
गत्याटोपैः श्रमविलुलितं देवि पादाब्जयुग्मम्।
स्नेहात् संवाहयितुमपि ह्रीपुञ्जमूर्तेऽप्यलज्जं
नामग्राहं निजजनमिमं हा कदा नोत्स्यसि त्वम् ?८२॥

हा नप्त्रि राधे तव सूर्यभक्तेः
कालः समुत्पन्न इतः कुतोऽसि ?
इतीव रोषान्मुखरा लपन्ती
सुधेव किं मां सुखयिष्यतीह ?८३॥

देवि भाषितपीयूषं स्मितकर्पूरवासितम् ।
श्रोत्राभ्यां नयनाभ्यां ते किं नु सेविष्यते मया ?८४॥

कुसुमचयनखेलां कुर्वती त्वं परीता
रसकुटिलसखीभिः प्राणनाथेन सार्धम् ।
कपटकलहकेल्या क्वापि रोषेण भिन्ना
मम मुदमतिवेलं धास्यसे सुव्रते किम् ?८५॥

नानाविधैः पृथुल-काकुभरैरसह्यैः
संप्रार्थितः प्रियतया बत माधवेन ।
त्वन्मानभंगविधये सदये जनोऽयं
व्यग्रः पतिष्यति कदा ललिता-पदान्ते ?८६॥

प्रीत्या मंगलगीत-नृत्यविलसद्वीणादि-वाद्योत्सवैः
शुद्धानां पयसां घटैर्बहुविधैः संवासितानां भृशम् ।
वृन्दारण्यमहाधिपत्यविधये यः पौर्णमास्या स्वयं
धीरे संविहितः स किं तव महासेको मया द्रक्ष्यते ?८७॥

भ्रात्रा गोयुतमत्र मंजुवदने स्नेहेन दत्त्वालयं
श्रीदाम्ना कृपणां प्रतोष्य जटिलां रक्षाख्यराकाक्षणे ।
नीतायाः सुखशोक-रोदनभरैस्ते संद्रवन्त्याः परं
वात्सल्याज्जनकौ विधास्यत इतः किं लालनां मेऽग्रतः ?८८॥

लज्जयालिपुरतः परतो मां गह्वरं गिरिपतेर्बत नीत्वा ।
दिव्यगानमपि तत्स्वरभेदं शिक्षयिष्यसि कदा सदये त्वम् ?८९॥

याचिता ललितया किल देव्या
लज्जया नतमुखीं गणतो माम् ।
देवि दिव्यरसकाव्यकदम्बं
पाठयिष्यसि कदा प्रणयेन ?९०॥

निजकुण्डतटिकुंजे गुञ्जद्भ्रमर-संकुले ।
देवि त्वं कच्छपी-शिक्षां कदा मां कारयिष्यसि ?९१॥

विहारैस्त्रुटितं हारं गुम्फितुं दयितं कदा ।
सखीनां लज्जया देवि संज्ञया मां निदेक्ष्यसि ?९२॥

स्वमुखान्मन्मुखे देवि कदा ताम्बूलचर्वितम् ।
स्नेहात्सर्वदिशो वीक्ष्य समये त्वं प्रदास्यसि ?९३॥

निबिड-मदनयुद्धे प्राणनाथेन सार्धं
दयितमधुरकाञ्ची या मदाद्विस्मृतासीत् ।
शशिमुखि समये तां हन्त संभाल्य भं या
त्वरितमिह तदर्थं किं त्वयाहं प्रहेया ?९४॥

केनापि दोष-लवमात्र-लवेन देवि
संताड्यमान इह धीरमते त्वयोच्चैः ।
रोषेण तल्ललितया किल नीयमानः
संद्रक्ष्यते किमु मनाक् सदरं जनोऽयम् ?९५॥

तवैवास्मि तवैवास्मि न जीवामि त्वया विना ।
इति विज्ञाय देवि त्वं नय मां चरणान्तिकम् ॥९६॥

स्वकुण्डं तव लोलाक्षि सप्रियायाः सदास्पदम् ।
अत्रैव मम संवास इहैव मम संस्थितिः ॥९७॥

हे श्रीसरोवर सदा त्वयि सा मदीशा
प्रेष्ठेन सार्धमिह खेलति कामरंगैः ।
त्वञ्चेत् प्रियात् प्रियमतीव तयोरितीमां
हा दर्शयाद्य कृपया मम जीवितं ताम् ॥९८॥

क्षणमपि तव संगं न त्यजेदेव देवी
त्वमसि समवयस्त्वान्नर्म-भूमिर्यदस्याः ।

इति सुमुखि विशाखे दर्शयित्वा मदीशां
　मम विरहहतायाः प्राणरक्षां कुरुष्व ॥९९॥

हा नाथ गोकुलसुधाकर सुप्रसन्न-
　वक्त्रारविन्द मधुरस्मित हे कृपार्द्र ।
यत्र त्वया विहरते प्रणयैः प्रियाऽऽरा-
　त्तत्रैव मामपि नय प्रियसेवनाय ॥१००॥

लक्ष्मीर्यदंघ्रि-कमलस्य नखाञ्चलस्य
　सौन्दर्य-बिन्दुमपि नार्हति लब्धुमीशे ।
सा त्वं विधास्यसि न चेन्मम नेत्रदानं
　किं जीवितेन मम दुःखदवाग्निदेन ?१०१॥

आशाभरैरमृतसिन्धुमयैः कथञ्चित्
　कालो मयातिगमितः किल साम्प्रतं हि ।
त्वं चेत् कृपां मयि विधास्यसि नैव किं मे
　प्राणैर्व्रजेन च वरोरु बकारिणापि ?१०२॥

त्वं चेत् कृपामयि कृपां मयि दुःखितायां
　नैवातनोरतितरां किमिह प्रलापैः ?
त्वत्कुण्डमध्यमपि तद्बहुकालमेव
　संसेव्यमानमपि किं नु करिष्यतीह ?१०३॥

अयि प्रणयशालिनि प्रणय-पुष्टदास्याप्तये
　प्रकाममतिरोदनैः प्रचुरदुःखदग्धात्मना ।
विलापकुसुमाञ्जलिर्हृदि निधाय पादाम्बुजे
　मया बत समर्पितस्तव तनोतु तुष्टिं मनाक् ॥१०४॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीविलापकुसुमाञ्जलिः संपूर्णः ।

# श्रीयुगलकिशोराष्टकम् ।

नवजलधर-विद्युद्द्योत-वर्णौ प्रसन्नौ
वदन-नयन-पद्मौ चारु-चन्द्रावतंसौ ।
अलक-तिलक-भालौ केशवेश-प्रफुल्लौ
भज भज तु मनो रे राधिका-कृष्णचन्द्रौ ॥ १ ॥

वसन-हरित-नीलौ चन्दनालेपनाङ्गौ
मणि-मरकत-दीप्तौ स्वर्णमाला-प्रयुक्तौ ।
कनक-वलय-हस्तौ रासनाट्य-प्रसक्तौ
भज भज तु मनो रे राधिका-कृष्णचन्द्रौ ॥ २ ॥

अति-मतिहर-वेशौ रङ्ग-भङ्गी-त्रिभङ्गौ
मधुर-मृदुल-हास्यौ कुण्डलाकीर्ण-कर्णौ ।
नटवर-वर-रम्यौ नृत्यगीतानुरक्तौ
भज भज तु मनो रे राधिका-कृष्णचन्द्रौ ॥ ३ ॥

विविध-गुण-विदग्धौ वन्दनीयौ सुवेशौ
मणिमय मकराद्यैः शोभिताङ्गौ स्फुरन्तौ ।
स्मित-नमित कटाक्षौ धर्म कर्म प्रदत्तौ
भज भज तु मनो रे राधिका-कृष्णचन्द्रौ ॥ ४ ॥

कनक-मुकुट-चूडौ पुष्पितोद्भूषिताङ्गौ
सकल-वन-निविष्टौ सुन्दरानन्द-पुञ्जौ ।
चरण-कमल-दिव्यौ देवदेवादि-सेव्यौ
भज भज तु मनो रे राधिका-कृष्णचन्द्रौ ॥ ५ ॥

अति-सुवलित-गात्रौ गन्धमाल्यैर्विराजौ
कति कति रमणीनां सेव्यमानौ सुवेशौ ।

मुनि–सुर–गण–भाव्यौ वेदशास्त्रादि–विज्ञौ
भज भज तु मनो रे राधिका–कृष्णचन्द्रौ ॥ ६ ॥

अति–सुमधुर–मूर्तौ दुष्ट–दर्प–प्रशान्तौ
सुरवर–वरदौ द्वौ सर्वसिद्धि–प्रदानौ ।
अतिरसवश–मग्नौ गीतवाद्यैर्वितानौ
भज भज तु मनो रे राधिका–कृष्णचन्द्रौ ॥ ७ ॥

अगम–निगम–सारौ सृष्टि–संहार–कारौ
वयसि नवकिशोरौ नित्यवृन्दावनस्थौ ।
शमनभय–विनाशौ पापिनस्तारयन्तौ
भज भज तु मनो रे राधिका–कृष्णचन्द्रौ ॥ ८ ॥

इदं मनोहरं स्तोत्रं श्रद्धया यः पठेन्नरः ।
राधिका–कृष्णचन्द्रौ च सिद्धिदौ नात्र संशयः ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचितं
श्रीयुगलकिशोराष्टकं संपूर्णम् ।

## श्रीव्रजनवीनयुवद्वन्द्वाष्टकम् ।

अदुर्विध–विदग्धतास्पद–विमुग्ध–वेश–श्रियो–
रमन्द–शिखिकन्धरा–कनक–निन्दि–वासस्त्विषोः ।
स्फुरत्–पुरट–केतकी–कुसुम–विभ्रमाभ्र–प्रभा–
निभाङ्ग–महसोर्भजे व्रज–नवीन–यूनोर्युगम् ॥ १ ॥

समृद्ध–विधु–माधुरी–विधुरता–विधानोद्धुरै–
र्नवाम्बुरुह–रम्यता–मद–विडम्बनारम्भिभिः ।
विलिम्पदिव वर्णकावलि–सहोदरैर्दिक्तटी–
र्मुखद्युतिभरैर्भजे व्रज–नवीन–यूनोर्युगम् ॥ २ ॥

विलास-कलहोद्धति-स्खलदमन्द-सिन्दूरभा-
गखर्वमदनांकुश-प्रकर-विभ्रमैरङ्कितम् ।
मदोद्धुरमिवेभयोर्मिथुनमुल्लसद्वल्लरी-
गृहोत्सव-रतं भजे व्रज-नवीन-यूनोर्युगम् ॥ ३ ॥

घन-प्रणय-निर्झर-प्रसर-लब्ध-पूर्तेर्मनो-
ह्रदस्य परिवाहितामनुसरद्भिरस्रैः प्लुतम् ।
स्फुरत्तनुरुहांकुरैर्नव-कदम्ब-जृम्भ-श्रियं
व्रजत्तदनिशं भजे व्रज-नवीन-यूनोर्युगम् ॥ ४ ॥

अनङ्ग-रण-विभ्रमे किमपि बिभ्रदाचार्यकं
मिथश्चल-दृगञ्चल-द्युति-शलाकया कीलितम् ।
जगत्यतुल-धर्मभिर्मधुर-नर्मभिस्तन्वतो-
र्मिथो विजयतां भजे व्रज-नवीन-यूनोर्युगम् ॥ ५ ॥

अदृष्टचर-चातुरीचल-चरित्र-चित्रायितैः
सह प्रणयिभिर्जनैर्विहरमाणयोः कानने ।
परस्पर-मनोमृगं श्रवण-चारुणा चर्चरी-
चयेन रजयद्भजे व्रज-नवीन-यूनोर्युगम् ॥ ६ ॥

मरन्दभर-मन्दिर-प्रतिनवारविन्दावली-
सुगन्धिनि विहारयोर्जलविहार-विस्फूर्जितैः ।
तपे सरसि वल्लभे सलिल-वाद्य-विद्याविधौ
विदग्ध-भुजयोर्भजे व्रज-नवीन-यूनोर्युगम् ॥ ७ ॥

मृषा विजयकाशिभिः प्रथित-चातुरी-राशिभि-
र्ग्लहस्य हरणं हठात् प्रकटयद्भिरुच्चैर्गिरा ।
तदक्ष-कलि-रक्षयोः कलित-रक्षयोः साक्षिभिः
कुलैः स्वसुहृदां भजे व्रज-नवीन-यूनोर्युगम् ॥ ८ ॥

इदं वलित-तुष्टयः परिपठन्ति पद्याष्टकं
द्वयोर्गुणविकाशि ये व्रज-नवीन-यूनोर्जनाः ।
मुहुर्नवनवोदयां प्रणय-माधुरीमेतयो-
रवाप्य निवसन्ति ते पद-सरोज-युग्मान्तिके ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीव्रजनवीनयुवद्वन्द्वाष्टकं संपूर्णम् ।

# श्रीराधामाधवयोर्नामयुगाष्टकम् ।

राधामाधवयोरेतद्वक्ष्ये नामयुगाष्टकम् ।
राधादामोदरौ पूर्वं राधिकामाधवौ ततः ॥ १ ॥

वृषभानुकुमारी च तथा गोपेन्द्रनन्दनः ।
गोविन्दस्य प्रियसखी गान्धर्वाबान्धवस्तथा ॥ २ ॥

निकुंजनागरौ गोष्ठकिशोरजनशेखरौ ।
वृन्दावनाधिपौ कृष्णवल्लभाराधिकाप्रियौ ॥ ३ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीराधामाधवयोर्नामयुगाष्टकं संपूर्णम् ।

# श्रीनवयुवद्वन्द्वदिदृक्षाष्टकम् ।

स्फुरदमल-मधूली-पूर्ण-राजीवराज-
न्नव-मृगमद-गन्ध-द्रोहि-दिव्याङ्ग-गन्धम् ।
मिथ इत उदितैरुन्मादितान्तर्विघूर्णद्-
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ १ ॥

कनकगिरि-खलोद्यत्-केतकीपुष्पदीव्य-
न्नवजलधर--मालाद्वेषि-दिव्योरु-कान्त्या ।
शबलमिव विनोदैरीक्षयत् स्वं मिथस्तद्-
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ २ ॥

निरुपम-नवगौरी-नव्य-कन्दर्पकोटि-
प्रथित-मधुरिमोर्मि-क्षालित-श्रीनखान्तम् ।
नव-नव-रुचि-रागैर्हृष्टभिष्टैर्मिथस्तद्-
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ ३ ॥

मदन-रस-विघूर्णन्नेत्र-पद्मान्त-नृत्यैः
परिकलित-मुखेन्दु-ह्री-विनम्रं मिथोऽब्दैः ।
अपि च मधुर-वाचं श्रोतुमावर्धिताशं
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ ४ ॥

स्मरसमर-विलासोद्गारमङ्गेषु रङ्गै-
स्तिमित-नव-सखीषु प्रेक्षमाणासु भंग्या ।
स्मित-मधुर-दृगन्तैर्ह्रीण-संफुल्ल-वक्त्रं
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ ५ ॥

मदन-समर-चर्याचार्यमापूर्ण-पुण्य-
प्रसर-नववधूभिः प्रार्थ्य-पादानुचर्यम् ।
समर-रसिकमेकप्राणमन्योऽन्यभूषं
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ ६ ॥

तट-मधुर-निकुंजे श्रान्तयोः श्रीसरस्याः
प्रचुर--जलविहारैः स्निग्धवृन्दैः सखीनाम् ।
उपहृत-मधुरङ्गैः पाययत्तन्मिथस्तै-
र्व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ ७ ॥

कुसुमशर–रसौघ–ग्रन्थिभिः प्रेमदाम्ना
मिथ इह वशवृत्त्या प्रौढयाद्धा निबद्धम् ।
अखिल--जगति राधामाधवाख्या–प्रसिद्धं
व्रजभुवि नवयूनोर्द्वन्द्वरत्नं दिदृक्षे ॥ ८ ॥

प्रणय–मधुरमुच्चैर्नव्ययूनोर्दिदृक्षा–
ष्टकमिदमतियत्नाद् यः पठेत् स्फार–दैन्यैः ।
स खलु परमशोभापुञ्जमञ्जु प्रकामं
युगलमतुलमक्ष्णोः सेव्यमारात् करोति ॥ ९ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित–स्तवावल्यां
श्रीनवयुवद्वन्द्वदिदृक्षाष्टकं संपूर्णम् ।

# श्रीयुगलाष्टकम् (१) ।

वृन्दावनविहाराढ्यौ सच्चिदानन्दविग्रहौ ।
मणिमण्डपमध्यस्थौ राधाकृष्णौ नमाम्यहम् ॥ १ ॥

पीतनीलपटौ शान्तौ श्यामगौरकलेवरौ ।
सदा रासरतौ सत्यौ राधाकृष्णौ नमाम्यहम् ॥ २ ॥

भावाविष्टौ सदा रम्यौ रासचातुर्यपण्डितौ ।
मुरलीगानतत्त्वज्ञौ राधाकृष्णौ नमाम्यहम् ॥ ३ ॥

यमुनोपवनावासौ कदंबनवमन्दिरौ ।
कल्पद्रुमवनाधीशौ राधाकृष्णौ नमाम्यहम् ॥ ४ ॥

यमुनास्नानसुभगौ गोवर्धनविलासिनौ ।
दिव्यमन्दारमालाढ्यौ राधाकृष्णौ नमाम्यहम् ॥ ५ ॥

मंजीररंजितपदौ नासाग्रगजमौक्तिकौ ।
मधुरस्मेरसुमुखौ राधाकृष्णौ नमाम्यहम् ॥ ६ ॥

अनन्तकोटिब्रह्माण्डे सृष्टिस्थित्यन्तकारिणौ ।
मोहनौ सर्वलोकानां राधाकृष्णौ नमाम्यहम् ॥ ७ ॥

परस्पररसाविष्टौ परस्परगणप्रियौ ।
रससागरसंपन्नौ राधाकृष्णौ नमाम्यहम् ॥ ८ ॥

इति श्रीमाधवेन्द्रपुरीचरणविरचितं
श्रीयुगलाष्टकं (१) संपूर्णम् ।

## श्रीयुगलाष्टकम् (२) ।

कृष्णप्रेममयी राधा राधा प्रेममयो हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ १ ॥

कृष्णस्य द्रविणं राधा राधाया द्रविणं हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ २ ॥

कृष्णप्राणमयी राधा राधाप्राणमयो हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ ३ ॥

कृष्णद्रवमयी राधा राधाद्रवमयो हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ ४ ॥

कृष्णगेहे स्थिता राधा राधागेहे स्थितो हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ ५ ॥

कृष्णचित्तस्थिता राधा राधाचित्तस्थितो हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ ६ ॥

नीलाम्बरधरा राधा पीताम्बरधरो हरिः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ ७ ॥

वृन्दावनेश्वरी राधा कृष्णो वृन्दावनेश्वरः ।
जीवने निधने नित्यं राधाकृष्णौ गतिर्मम ॥ ८ ॥

इति श्रीयुगलाष्टकं (२) संपूर्णम् ।

## श्रीस्वप्नविलासामृताष्टकम् ।

प्रिये ! स्वप्ने दृष्टा सरिदिनसुतेवात्र पुलिनं
यथा वृन्दारण्ये नटनपटवस्तत्र बहवः ।
मृदंगाद्यं वाद्यं विविधमिह कश्चिद्द्विजमणिः
स विद्युद्गौरांगः क्षिपति जगतीं प्रेमजलधौ ॥ १ ॥

कदाचित् कृष्णेति प्रलपति रुदन् कर्हिचिदसौ
क्व राधे ! हा हेति श्वसिति पतति प्रोज्झति धृतिम् ।
नटत्युल्लासेन क्वचिदपि गणैः स्वैः प्रणयिभि-
स्तृणादिब्रह्मान्तं जगदतितरां रोदयति सः ॥ २ ॥

ततो बुद्धिर्भ्रान्ता मम समजनि प्रेक्ष्य किमहो
भवेत् सोऽयं कान्तः किमयमहमेवास्मि न परः ।
अहं चेत् क्व प्रेयान्मम स किल चेत् काहमिति मे
भ्रमो भूयो भूयानभवदथ निद्रां गतवती ॥ ३ ॥

प्रिये ! दृष्ट्वा तास्ताः कुतुकिनि ! मया दर्शितचरी
रमेशाद्या मूर्तीर्न खलु भवती विस्मयमगात् ।

कथं विप्रो विस्मापयितुमशकत् त्वां तव कथं
तथा भ्रान्तिं धत्ते स हि भवति को हन्त ! किमिदम् ॥ ४ ॥

इति प्रोच्य प्रेष्ठां क्षणमथ परामृष्य रमणो
हसन्नाकूतज्ञं व्यनुददथ तं कौस्तुभमणिम् ।
तथा दीप्तं तेने सपदि स यथा दृष्टमिव त-
द्विलासानां लक्ष्मं स्थिरचरगणैः सर्वमभवत् ॥ ५ ॥

विभाव्याथ प्रोचे प्रियतम ! मया ज्ञातमखिलं
तवाकूतं यत्त्वं स्मितमतनुथास्तत्त्वमसि सः ।
स्फुटं यन्नावादीर्यदभिमतिरत्राप्यहमिति
स्फुरन्ती मे तस्मादहमपि स एवेत्यनुमिमे ॥ ६ ॥

यदप्यस्माकीनं रतिपदमिदं कौस्तुभमणिं
प्रदीप्यात्रैवादीदृशदखिलजीवानपि भवान् ।
स्वशक्त्याविर्भूय स्वमखिलविलासं प्रतिजनं
निगद्य प्रेमाब्धौ पुनरपि तदाधास्यसि जगत् ॥ ७ ॥

यदुक्तं गर्गेण व्रजपतिसमक्षं श्रुतिविदा
भवेत् पीतो वर्णः क्वचिदपि तवैतन्न हि मृषा ।
अतः स्वप्नः सत्यो मम च न तदा भ्रान्तिरभव-
त्त्वमेवासौ साक्षादिह यदनुभूतोऽसि तद्दतम् ॥ ८ ॥

पिबेद् यस्य स्वप्नामृतमिदमहो ! चित्तमधुपः
स सन्देहस्वप्नात्त्वरितमिह जागर्ति सुमतिः ।
अवाप्तश्चैतन्यं प्रणयजलधौ खेलति यतो
भृशं धत्ते तस्मिन्नतुलकरुणां कुंजनृपतिः ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितं
श्रीस्वप्नविलासामृताष्टकं संपूर्णम् ।

# श्रीराधामाधवाष्टकम् ।

आनन्दः परमानन्दः पूर्णानन्दः परात्परः ।
प्रेमानन्दादिसन्दोहः श्रीराधामाधवो मम ॥ १ ॥

धर्मार्थकाममोक्षाणां स्मृतिमात्रेण दायकः ।
बुद्धिव्यामोहकः साक्षात् श्रीराधामाधवो मम ॥ २ ॥

राकारो राधिका धाम मकारो माधवेङ्गितः ।
रामनामाधाररूपः श्रीराधामाधवो मम ॥ ३ ॥

साकारः सर्वदा सोऽयं निराकारो न हि क्वचित् ।
सदा गोलोकनिलयः श्रीराधामाधवो मम ॥ ४ ॥

सुखनाम्ना स्वयं सर्वान् कर्षति हृदयङ्गमः ।
कृष्णनामावतारी सः श्रीराधामाधवो मम ॥ ५ ॥

व्रजवृन्दावनानन्दी नित्यः श्रीनन्दनन्दनः ।
गोपीगोपालकप्रेष्ठः श्रीराधामाधवो मम ॥ ६ ॥

जयदेवस्वरूपेण स्वगानकरणोत्सुकः ।
गीतगोविन्दरसधीः श्रीराधामाधवो मम ॥ ७ ॥

रावलग्रामसंप्राप्तस्तातपादकृतादरः ।
कृपासिन्धुर्दीनबन्धुः श्रीराधामाधवो मम ॥ ८ ॥

जयदेवतनूजेन कृष्णेनाष्टकमद्भुतम् ।
कृतं तेन प्रसन्नोहि श्रीराधामाधवो मम ॥ ९ ॥

इति श्रीकृष्णदेवगोस्वामिविरचितं
श्रीराधामाधवाष्टकं संपूर्णम् ।

# श्रीसुरतस्मरणाष्टकम् ।

श्रीमाधवी-कुसुम-सौरभ मंजुकुंजे
तल्पे द्विरेफ-कुल-गुंजित-कंज-पुंजे ।
संविष्टयोः सुखदकेलि-विशेषभाजोः
श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ १ ॥

श्रीमत्कटीतटगतातुल सक्थियुग्मं
प्रेङ्खन्नितंबरुचिरंजितदर्शिकाक्षम् ।
संमर्दजैः परिमलैः परिपूरिताशं
श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ २ ॥

तुङ्गस्तनालभन-शाणित-पाणिजास्त्र
रागी द्विजच्छदरसादन-चुम्बदानम् ।
यज्ञोत्सवं रतिपतेरिव मंगलाढ्यं
श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ ३ ॥

जिह्वारसाल-रस चूषण जातलोभं
क्षुब्धीभवत् सुचलचारु-विनोद-देहम् ।
आकंपितालक-विराजि-सुधोर्मिवक्त्रं
श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ ४ ॥

चंचत्कटीरतट-नर्तित-क्षुद्रघण्टि
ध्वानामृत-स्नपित-प्रेमवदालिकर्णम् ।
शीत्कार-सन्तातिततं मणिताढ्यमाहो
श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ ५ ॥

हेमाचलाभ-निबिडस्तन-पीडनोत्थ
क्रोध-प्रणीत-मधुराधर-गण्डदंशम् ।

शंसन् मनोजनृपतेरिव वैभवाग्रं
　　श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ ६ ॥

आन्दोलितातिपटुधृष्ट क्वचित् प्रयत्नात्
　　जंघालता-सुदृढवेष्टन-कौशलेन ।
निष्पन्द-भावमचिराद् समितं सुरम्यं
　　श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ ७ ॥

उत्कंप-रम्य हृदयं भुजबद्धगात्रं
　　श्रीमन्मुखोपरिमुख श्लथसर्वगात्रम् ।
सर्वत्र शश्वदनपायिसुखं ददानं
　　श्रीराधिकागिरिभृतोः सुरतं स्मरामि ॥ ८ ॥

वृन्दावने-रसिक-शेखर केलिरंगे
　　श्रीरंगिणी-मुख-विनिःसृतमष्टपद्यम् ।
तद्भाव शुद्धहृदयः पठति प्रकामं
　　यः सोऽचिरात् सुलभते प्रिययुग्मसेवाम् ॥ ९ ॥

इति श्रीराधिकानाथगोस्वामिविरचितं
श्रीसुरतस्मरणाष्टकं संपूर्णम् ।

# श्रीयुगलपरिहारस्तोत्रम् ।

हे सौन्दर्यनिदान रूपगरिमन् माधुर्यलीलानट !
　　हे आश्चर्यविशेषवेशधर हे हे वंशिभूषाविभो !
हे वृन्दाटविभूविलासिनि लसत्केलीकलाकौमुदि !
　　हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ १ ॥

हे हे कृष्ण व्रजेन्द्रनन्दन विभो हे राधिके श्रीमति !
हे श्रीमल्ललितादिसख्यसुखिते ! हे श्यामलाप्रेमदे !
हे लीलाकलनात्तलालसलसद्भंगीत्रयप्रेयसि !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ २ ॥

हे पीताम्बरशोभनाब्जकर हे हे नीलचित्राम्बरे !
हे वंशीवटकेलिकौतुकपटो हे कुञ्जगेहेश्वरि !
हे श्रीरासविलासलम्पट गुरो ! हे सुन्दरि प्रीतिदे !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ ३ ॥

हे जाम्बूनदनिन्दिसुन्दरतनो हे हे घनश्यामल !
हे हे पंकजपत्रनेत्रयुगले हे खञ्जनीलोचने !
हे चूडामणिबद्धचामरकचे हे हारिणि स्वामिनि !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ ४ ॥

हे हे शारदपूर्णचन्द्रवदने हे हे सुरम्यानन !
श्रीवत्सांकितचारुचित्रहृदये ! हे चित्रलेखाञ्चिते !
हे बिम्बाधरचारुचित्रचिबुके ! भ्रूभंगरम्यालिके !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ ५ ॥

हे हे भानुसुतायशोमतिसुतौ रामानुज श्यामल !
हे नाथ व्रजचन्द्र गोकुलपते हे नागरीनागर !
हे सर्वस्वविलासिनीरतिपरे हे केशवामोदिनि !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ ६ ॥

हे गान्धर्वे नटवरवपुर्मन्मथानन्दसिन्धो !
हे वैदग्ध्याधिकमधुरिमाधार हे प्राणनाथ !
हे रामापरमे परात्परपरीरम्भे सदोल्लासिनि !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ ७ ॥

कारुण्यामृतचन्द्र सुन्दरवपुर्लावण्यलीलानट !
हे गोपीगणनाथ गोत्रधर हे गोविन्द गोपाल हे !
हे गौरीगुरुगौरवाखिलगुरो गोपांगनावेष्टिते !
हे राधे चरणे विधेहि शरणं हे कृष्ण तृष्णां हर ॥ ८ ॥

हे हे कृपालुचरित ! व्रजकल्पवृक्ष !
कारुण्यलेशकृत-कातरलोकरक्ष ।
हे कृष्ण ! हे रमण ! हे भुवनैकनाथ !
हा हा कदाति करुणा भवतोर्भवेन्मे ॥ ९ ॥

इति श्रीयुगलपरिहारस्तोत्रं संपूर्णम् ।

# श्रीराधाकृष्णयोरष्टकालीयलीला-स्मरणमङ्गलस्तोत्रम् ।

( लीलामाहात्म्यम् )

श्रीराधाप्राणबन्धोश्चरणकमलयोः केशशेषाद्य-गम्या
या साध्या प्रेमसेवा व्रजचरितपरैर्गाढ-लौल्यैकलभ्या ।
सा स्यात् प्राप्ता यया तां प्रथयितुमधुना मानसीमस्य सेवां
भाव्यां रागाध्वपान्थैर्व्रजमनुचरितं नैत्यिकं तस्य नौमि ॥ १ ॥

( संक्षिप्त लीलासूत्रम् )

कुञ्जाद्गोष्ठं निशान्ते प्रविशति कुरुते दोहनान्नाशनाद्यां
प्रातः सायञ्च लीलां विहरति सखिभिः सङ्गवे चारयन् गाः ।

मध्याह्ने चाथ नक्तं विलसति विपिने राधयाद्धापराह्णे
गोष्ठं याति प्रदोषे रमयति सुहृदो यः स कृष्णोऽवतान्नः ॥ २ ॥

( निशान्तलीला )

रात्र्यन्ते त्रस्तवृन्देरित-बहुविरवैर्बोधितौ कीरशारी-
पद्यैर्हृद्यैरहृद्यैरपि सुखशयनादुत्थितौ तौ सखीभिः ।
दृष्टौ हृष्टौ तदात्वोदित-रतिललितौ कक्खटीगीः-सशङ्कौ
राधाकृष्णौ सतृष्णावपि निजनिजधाम्न्याप्ततल्पौ स्मरामि ॥ ३ ॥

( प्रातर्लीला )

राधां स्नातविभूषितां व्रजपयाहूतां सखीभिः प्रगे
तद्गेहे विहितान्नपाकरचनां कृष्णावशेषाशनाम् ।
कृष्णं बुद्धमवाप्तधेनुसदनं निर्व्यूढगोदोहनं
सुस्नातं कृतभोजनं सहचरैस्ताञ्चाथ तञ्चाश्रये ॥ ४ ॥

( पूर्वाह्णलीला )

पूर्वाह्णे धेनुमित्रैर्विपिनमनुसृतं गोष्ठलोकानुयातं
कृष्णं राधाप्तिलोलं तदभिसृतिकृते प्राप्ततत्कुण्डतीरम् ।
राधाञ्चालोक्य कृष्णं कृतगृहगमनामार्ययार्कार्चनायै
दिष्टां कृष्णप्रवृत्त्यै प्रहितनिजसखीवर्त्मनेत्रां स्मरामि ॥ ५ ॥

( मध्याह्नलीला )

मध्याह्नेऽन्योन्यसङ्गोदित-विविधविकारादि-भूषाप्रमुग्धौ
वाम्योत्कण्ठातिलोलौ स्मरमख-ललिताद्यालि-नर्माप्तशातौ ।
दोलारण्याम्बु-वंशीहृतिरतिमधुपानार्क-पूजादिलीलौ
राधाकृष्णौ सतृष्णौ परिजनघटया सेव्यमानौ स्मरामि ॥६॥

( अपराह्णलीला )

श्रीराधां प्राप्तगेहां निजरमणकृते क्लृप्तनानोपहारां
सुस्नातां रम्यवेशां प्रियमुखकमलालोकपूर्णप्रमोदाम् ।
कृष्णञ्चैवापराह्णे व्रजमनुचलितं धेनुवृन्दैर्वयस्यैः
श्रीराधालोकतृप्तं पितृमुखमिलितं मातृमृष्टं स्मरामि ॥ ७ ॥

( सायंलीला )

सायं राधां स्वसख्या निजरमणकृते प्रेषितानेकभोज्यां
सख्यानीतेश-शेषाशन-मुदितहृदां तां च तं च व्रजेन्दुम् ।
सुस्नातं रम्यवेशं गृहमनु जननीलालितं प्राप्तगोष्ठं
निर्व्यूढोऽस्रालिदोहं स्वगृहमनु पुनर्भुक्तवन्तं स्मरामि ॥ ८ ॥

( प्रदोषलीला )

राधां सालीगणां तामसित-सित-निशायोग्यवेशां प्रदोषे
दूत्या वृन्दोपदेशादभिसृत-यमुनातीर-कल्पागकुञ्जाम् ।
कृष्णं गोपैः सभायां विहितगुणिकलालोकनं स्निग्धमात्रा
यत्नादानीय संशायितमथ निभृतं प्राप्तकुञ्जं स्मरामि ॥ ९ ॥

( निशालीला )

तावुत्कौ लब्धसङ्गौ बहुपरिचरणैर्वृन्दयाराध्यमानौ
गानैर्नर्मप्रहेली-सुलपन-नटनैः रासलास्यादि-रङ्गैः ।
प्रेष्ठालीभिर्लसन्तौ रतिगतमनसौ मृष्ट-माध्वीकपानौ
क्रीडाचार्यौ निकुंजे विविध-रतिरणोद्धत्य-विस्तारितान्तौ ॥१०॥

ताम्बूलैर्गन्धमाल्यैर्व्यजन-हिमपयः-पादसंवाहनाद्यैः
प्रेम्णा संसेव्यमानौ प्रणयिसहचरीसञ्चयेनाप्तशातौ ।
वाचा कान्तैरणाभिर्निभृत--रतिरसैः कुञ्जसुप्तालिसंघौ
राधाकृष्णौ निशायां सुकुसुमशयने प्राप्तनिद्रौ स्मरामि ॥११॥

इति श्रीमद्रूपगोस्वामिविरचितं
श्रीराधाकृष्णयोरष्टकालीयलीला-स्मरणमङ्गलस्तोत्रं संपूर्णम् ।

# श्रीनिकुञ्जकेलिस्तोत्रम् ।

तल्पे पल्लवकल्पिते सुकुसुमे रम्ये निविष्टौ सुखं
व्यामुग्धौ रतिकेलिभिः प्रमुदितौ घूर्णायमानेक्षणौ ।
शश्वन्मानस-हृद्य-मन्मथमदावेशाति मुग्धाननौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ १ ॥

रासोल्लासविलासिनौ नव नव प्रेमामृतस्यन्दिनौ
लीलाचंचललोचनांचललसन्नासाग्रमुक्तोज्ज्वलौ ।
प्रेमानन्दिमुखारविन्दमधुरौ सौन्दर्यसाराञ्चितौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ २ ॥

शुद्धस्वर्णनवीनमेघसुभगौ माधुर्यकल्लोलिनौ
लावण्यामृतमेदुरौ तरुणिमाप्रोल्लासिकैशोरकौ ।
उत्फुल्लासितशोणपद्मनयनौ कन्दर्पकोटिद्युती
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ३ ॥

उत्तंसीकृतकेकिपिच्छविलसद् भृङ्गावली-विभ्रम-
द्वासन्ती-नवमल्लिरम्यकवरीचूडौ सुबिंबाधरौ ।
अन्योन्यं मुखपंकजावकलनौ प्रोत्सारिमारोत्सवौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ४ ॥

आनन्दामृतसागरौ रसकलावैदग्ध्यवृन्दालयौ
वृन्दारण्यसुधाकरौ स्मरमहाकेलीकलापण्डितौ ।
उन्मीलन्नवकुन्ददामरुचिरावन्योन्यमालिङ्गितौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ५ ॥

कस्तुरीतिलकावली–सुविलसद्भालौ भ्रमद्भ्रूलतौ
चारुस्निग्धकपोलमण्डपचलद्भास्वन्मणीकुण्डलौ ।
ईषद्धाससुधाभिषेचनवलन्नर्म–प्रमोदौ मिथः
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ६ ॥

उद्भ्राजन्मृगनाभिबिन्दुचिबुकश्रीवत्सवक्षःश्रियौ
लीलांभोजविशुद्धहेमरुचिरे सद्वाससी बिभ्रतौ ।
नित्यं नूतनरम्यवेशललितौ क्रीडाकलालंपटौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ७ ॥

अन्योन्यं कृतमुग्धवेशरचनौ नानामणिप्रस्फुरत्
स्वर्णस्वङ्गदमुद्रिकावलयसच्छायालसच्छ्रीभुजौ ।
काश्मीरागुरुचन्दनाक्तवपुषौ त्रैलोक्यसंमोहनौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ८ ॥

भास्वद्भासुरचारुहार विलसद्वक्षोजवक्षच्छवी
चंचत्कांचनकांचीदाममधुरश्रोणीतटौ श्रीनटौ ।
श्रीमल्लोहितकंजगंजनपदे सिञ्जानमंजीरकौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥ ९ ॥

संहृष्टौ घनचुम्बनान्नवपरीहासामृतासेचना–
दाश्लेषान्मृदुमन्दमंजुहसितात् स्निग्धावलोकान्मुहुः ।
त्रैलोक्याद्भुतसुन्दरौ रतिकलावैचित्र्यपारंगतौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥१०॥

साक्षान्मन्मथमन्मथौ रसवहल्लीलातरंगार्णवौ
प्रेमान्धौ रतिलालसौ रसभरौ शृंगारवल्लीद्रुमौ ।
मूर्त्याभूषणभूषणांगकलया व्यामोहयन्तौ मिथः
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥११॥

पीयूषद्युतिकोटिनिन्दितलसल्लक्ष्मीलवौ माधवौ
स्निग्धौ दर्शनशीतलौ प्रणयिनौ प्राणाधिकस्नेहिनौ ।
प्राणेशौ रसवारिधी घनतरप्रोन्मीलदानन्ददौ
पश्यालि ! स्फुटकेलिकुंजसदने श्रीराधिकामाधवौ ॥१२॥

एतद्द्वादशकं निकुंजगृहिणोः श्रीराधिकाकृष्णयो-
र्ये शृण्वन्ति पठन्ति चित्तरमणं श्रीकुंजकेल्याख्यकम् ।
प्रेमाणं पदपंकजे रसवतोः प्राणेशयोस्त्वेतयोः
सान्द्रानन्दरसामृतैकवपुषोस्ते प्राप्नुवन्ति ध्रुवम् ॥१३॥

इति श्रीरसिकानन्दगोस्वामिविरचितं
श्रीनिकुञ्जकेलिस्तोत्रं संपूर्णम् ।

# श्रीयुगलकिशोराष्टोत्तरशतनामस्तोत्रम् ।

श्रीराधाकृष्णदेवस्य नाम्नामष्टोत्तरं शतम् ।
राससंकीर्तनं नाम शृणु भागवतोत्तम ॥ १ ॥

राधानामसुधायुक्तं कृष्णनामरसालयम् ।
यः पठेत् प्रातरुत्थाय व्याधिभिः स न बाध्यते ॥ २ ॥

येनोच्चैरुच्यते रागै राधाकृष्णपदद्वयम् ।
वामदक्षिणतस्तस्य राधाकृष्णोऽनुधावति ॥ ३ ॥

सुखेन पूर्णसंपत्तिं लभते वैष्णवो जनः ।
श्रीपूर्वं जयपूर्वं वा राधाकृष्णेति संस्मरन् ॥ ४ ॥

मुच्यते सर्वपापेभ्यो राधाकृष्णेति कीर्तनात् ।
लक्षनाम्नां सहस्राणां फलमाप्नोति मानवः ॥ ५ ॥

राधाकृष्णमहामंत्रं यो जपेद् भुक्तिमुक्तिदम् ।
अन्तकाले भवेत् तस्य राधाकृष्णेति संस्मृतिः ॥ ६ ॥

राधाकृष्णौ परं ब्रह्म प्रकृतेः पुरुषात् परम् ।
ध्यायते योगिभिर्नित्यं राधाकृष्णमयं जगत् ॥ ७ ॥

राधिका माधवार्धाङ्गे राधार्धाङ्गे च माधवः ।
वामदक्षिणतः पातु गौरांगी श्यामसुन्दरः ॥ ८ ॥

वामाङ्गे राधिका पातु दक्षिणाङ्गे च माधवः ।
सर्वाङ्गं मे सदा पातां राधाकृष्णौ दिवानिशम् ॥ ९ ॥

श्रीमद्वृन्दावनं ध्यायेद् वैष्णवो हृदये सदा ।
महापदं योगपीठं कांचनस्थलनिर्मितम् ॥१०॥

पूर्णचन्द्रोदयं नित्यं सर्वत्र कुसुमान्वितम् ।
कदंबपादपच्छायं कालिन्दीपुलिनोत्तमम् ॥११॥

सोद्यानमाधवीकुञ्ज-भ्रमद्भ्रमरविभ्रमम् ।
कोकिलध्वनिसंगीतं मयूराद्यभिनर्तनम् ॥१२॥

कृष्णसारसमाकीर्णं कामधेनुसुखास्पदम् ।
गोपगोपीप्रियस्थानं कल्पपादपशोभितम् ॥१३॥

मध्ये गोवर्धनं तत्र विचित्रमणिमन्दिरम् ।
रत्नसिंहासनासक्तं पद्मरागसरोरुहम् ॥१४॥

तन्मध्ये चिन्तयेत् कृष्णं किशोरं नन्दनन्दनम् ।
वामे तस्य प्रियां राधां किशोरीं वार्षभानवीम् ॥१५॥

इन्द्रनीलमणिश्यामं शिखण्डाबद्धचूडकम् ।
तप्तकांचनगौरांगीं चिन्तामणिकलापिनीम् ॥१६॥

गुंजदामकृतोत्तंसं चन्दनेन्दुविभूषितम् ।
सिन्दूरबिंदुशोभाढ्यां कस्तूरीवरचित्रिताम् ॥१७॥

प्रफुल्लपुण्डरीकाक्षं पूर्णेन्दुमण्डलाननम् ।
इन्दीवरविशालाक्षीं श्रीयुक्तकमलाननाम् ॥१८॥

हास्यविलोकनालोलं तांबुलरंजिताधरम् ।
मधुरस्मेरसंभाषां बिंबाधरसुधामयीम् ॥१९॥

गजमौक्तिकनासाग्रस्फुरन्मकरकुण्डलम् ।
नासाग्रावलसन्मुक्तां कपोलालोलकुण्डलाम् ॥२०॥

श्रीवत्सकौस्तुभोरस्कं वनमालाविभूषितम् ।
युग्मश्रीफलवक्षोजां शंखकंकणधारिणीम् ॥२१॥

रत्नालंकृतसर्वाङ्गं पीतांबरविराजितम् ।
मल्लिकाहारकेयूरां नीलकौषेयभूषिताम् ॥२२॥

मणिमञ्जीरपादाब्जं तुलसीमंजरीप्रियम् ।
अलक्तपादकमलां कूजन्नूपुररंजिताम् ॥२३॥

पूजितं कोटिकन्दर्पैः परमानन्दमन्दिरम् ।
लीलालावण्यकल्याणीं लीलागानविनोदिनीम् ॥२४॥

जगन्मोहनसंगीतं गोपीमण्डलमण्डितम् ।
रासमण्डलमध्यस्थां जगन्मोहनमोहिनीम् ॥२५॥

ध्यात्वैवं भक्तिभावेन परमाराध्यदेवताम् ।
रासमंचे पठेद् भक्त्या नाम्नामष्टोत्तरं शतम् ॥२६॥

राससंकीर्तनस्यास्य नाम्नामष्टशतस्य च ।
ऋषिर्नारदगोस्वामी छन्दोऽनुष्टुप् समीरितम् ॥२७॥

श्रीराधाकृष्णदेवोऽस्य परमानन्ददेवता ।
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ॥२८॥

श्रीकृष्णः सच्चिदानन्दो गोविन्दो नन्दनन्दनः ।
श्रीराधा परमाराध्या राधिका वार्षभानवी ॥२९॥

श्रीराधावल्लभो देवो राधिकाप्राणवल्लभः ।
श्रीकृष्णवल्लभा देवी माधवप्राणवल्लभा ॥३०॥

राधामुखाब्जमधुपो राधिकाहृदयङ्गमः ।
श्रीकृष्णरसिका रामा गोविन्दहृदयङ्गमा ॥३१॥

वनमाली घनश्यामो व्रजेन्द्रः श्यामसुन्दरः ।
गोपाली गोकुलेन्द्राणी गोपिका गोधनेश्वरी ॥३२॥

गोपालनाथो गोगोप्ता गोपालो गोकुलेश्वरः ।
श्रीगोपवल्लभा गोपी गोपालप्राणवल्लभा ॥३३॥

श्रीमद्वृन्दावनस्वामी किशोरो रसनायकः ।
वृन्दावनेश्वरी वृन्दा किशोरी रासमुन्दरी ॥३४॥

गोवर्धनधरो रामो माधवो व्रजमोहनः ।
कुञ्जविहारिणी धीरा वल्लभी व्रजवासिनी ॥३५॥

दामोदरो व्रजेशश्च राधेशो मुरलीधरः ।
विद्युद्गौरी सुवर्णाङ्गी श्रीमती गोकुलेश्वरी ॥३६॥

अच्युतः कमलाकान्तो मुकुन्दश्च जनार्दनः ।
लीलावती रतिप्रीता रासकर्त्री कलावती ॥३७॥

मथुरेशो हृषीकेशः केशवो गरुडध्वजः ।
सर्वाङ्गसुन्दरी धन्या तुलसी केशवप्रिया ॥३८॥

कंसारिः कैटभारिश्च मुरारिर्मधुसूदनः ।
कल्याणी कमला लक्ष्मीः सर्वाद्या च सरस्वती ॥३९॥

वासुदेवो हरिः शौरिश्चक्रपाणिर्गदाधरः ।
चन्द्रावली विशालाक्षी ललिता कुलपद्मिनी ॥४०॥

नारायणो जगन्नाथः श्रीविष्णुः पुरुषोत्तमः ।
विष्णुप्रिया रमा दुर्गा महामाया प्रभावती ॥४१॥

पद्मनाभो यदुश्रेष्ठः श्रीधरः पद्मलोचनः ।
जांबवती जगन्माता सत्यभामा च रुक्मिणी ॥४२॥

इत्येवं रासतंत्रोक्तं नाम्नामष्टोत्तरं शतम् ।
आयुरारोग्यसंपत्तिजयकल्याणकीर्तिदम् ॥४३॥

य इदं मनुजो नित्यं पठेद् वा धारयेत् सदा ।
वांछासिद्धिर्भवेत् तस्य भक्तिः स्यात् प्रेमलक्षणा ॥४४॥

लक्ष्मीस्तस्य वसेद् गेहे मुखे भाति सरस्वती ।
धर्मार्थकामकैवल्यं लभते नित्यमेव सः ॥४५॥

इति श्रीरासोल्लासे श्रीसदाशिवसंवादे
श्रीयुगलकिशोराष्टोत्तरशतनामस्तोत्रं संपूर्णम् ।

# श्रीरूपचिन्तामणिः ।

चन्द्रार्धं कलसं त्रिकोणधनुषी खं गोष्पदं प्रोष्ठिकां
शंखं सव्यपदेऽथ दक्षिणपदे कोणाष्टकं स्वस्तिकम् ।
चक्रं छत्रयवांकुशं ध्वज-पवी जम्बूर्ध्वरेखाम्बुजं
बिभ्राणं हरिमूनविंशति-महालक्ष्म्यार्चितांघ्रिं भजे ॥ १ ॥

छत्रारिध्वजवल्लिपुष्पवलयान् पद्मोर्ध्वरेखांकुशा-
नर्धेन्दुं च यवं च वाममनु या शक्तिं गदां स्यन्दनम् ।
वेदी-कुण्डल-मत्स्य-पर्वत-दरं धत्तेऽन्वसव्यं पदं
तां राधां चिरमूनविंशति-महालक्ष्म्यार्चितांघ्रिं भजे ॥२॥

कलिन्दात्मजा-वेष्टिते मंजु-वृन्दा-
वने कुञ्ज-पुञ्जावृत-स्वर्णभूमौ ।
मणि-कुट्टिमान्तर्महायोगपीठे
स्फुरत्तुङ्ग-कल्पद्रु-मूले सुगन्धौ ॥ ३ ॥

अतिभ्राजिरत्नारविन्दच्छदाली-
स्थिताली-श्रितौ यौ किशोरौ विभातः ।
तयोरादिमस्याम्बुदाभस्य नित्यं
स्मर त्वं मनो ! मंजुलं मन्दहास्यम् ॥ ४ ॥

लसद्बर्ह-गुञ्जाञ्चितां चारुचूडां
सुवक्रालकां चित्रकार्चिर्ललाटम् ।
भ्रुवौ लोचने नासिकां स्वच्छगण्डौ
श्रुति-द्वन्द्वमुद्यन्मणि-कुण्डलाढ्यम् ॥ ५ ॥

सुशोणाधरौ वंशिकामास्यवृत्तां
त्रिरेखाञ्चिकण्ठं मृदुस्कन्धयुग्मम् ।
भुजावायतौ साङ्गदौ भूषणाढ्यौ
करावंगुलीः सोर्मिकालक्ष्मरेखाः ॥ ६ ॥

उरःकौस्तुभ-वन्य-मुक्तादिमालाः
श्रियं धर्मरेखां स्तनोर्ध्वे प्रदीप्ताम् ।
लसत्तुन्द-रोमावलीर्नाभिपद्मं
कृशं मध्यमं किङ्किणीं पीतवासः ॥ ७ ॥

सुपीनोरुरुग्जानुजंघान्तगुल्फ-
द्वयाधो रणन्नूपुरौ पादपद्मम् ।
मनोज्ञांगुलीः श्वेतशोणान्नखांस्त-
त्तलारुण्यमापार्ष्णि-विभ्राजमाणम् ॥ ८ ॥

अथांगुष्ठमूले यवायातपत्रं
तनु तर्जनीसन्धिभागूर्ध्वरेखाम् ।
पदार्धावधि कुञ्चितां मध्यमाधोऽ-
म्बुजं तत्तलस्थं ध्वजं सत्पताकम् ॥ ९ ॥

कनिष्ठातले त्वंकुशं वज्रमेषां
तले स्वस्तिकानां चतुष्कं चतुर्भिः ।
युतं जम्बुभिर्मध्यभाताष्टकोणं
मनो ! रे स्मर श्रीहरेर्दक्षिणांघ्रौ ॥ १० ॥

वियन्मध्यमाधः स्मरांगुष्ठमूले
दरं तद्द्वयाधो धनुर्ज्याविहीनम् ।
ततो गोष्पदं तत्तले तु त्रिकोणं
चतुष्कुंभमर्धेन्दुमीनौ च वामे ॥ ११ ॥

तलं शोणिमाक्तं नखान् श्वेतरक्तान्
मृदु शोणपार्ष्णी पदे नूपुराढ्ये ।
लसद्गुल्फ-जंघोरुपर्वोरुयुग्मं
तडित्पीतवासो मणिकिंकिणीयुक् ॥ १२ ॥

कृशं मध्यमं नाभिपद्मं गभीरं
तनु रोमराजीं दलाभोदरस्थाम् ।
उरो विस्तृतं कौस्तुभं लंबिहारान्
स्रजं श्रीतुलस्याः स्तनोर्ध्वे तु वामे ॥ १३ ॥

श्रियं दक्षिणे ब्रह्मलक्ष्म त्रिरेखं
　　स्व णां जनुःसह्मकण्ठं सुवृत्तम् ।
मृदूत्तुङ्गमंसद्वयं स्थूलफुल्लौ
　　भुजौ साङ्गदौ कान्तिपूर्णौ कफोणी ॥ १४ ॥

मणिबन्धभूषाञ्चितं हस्तयुग्मं
　　महालक्ष्मरेखातिरक्तौ तु पाणी ।
सुवर्णोर्मिका अंगुलीस्तन्नखेन्दून्
　　मुखं दीप्तदन्ताधरौष्ठाक्षिगण्डम् ॥ १५ ॥

सुनासा-भ्रू-गोरोचना-चित्रकार्चि-
　　र्ललाटं श्रुती सञ्ज्वलत्-कुण्डलाढ्ये ।
कचान् कुञ्चितान् पिच्छ-गुञ्जप्रसूनैः
　　श्रितां चारुचूडां स्फुरन्मन्दहास्यम् ॥ १६ ॥

वृन्दावने यौ रसिकौ विभातः
　　परस्पर-प्रेमसुधा-रसार्द्रौ ।
तयोस्तडिन्निन्दिरुचः किशोर्या
　　नीलांशुकान्तः स्मर मन्दहास्यम् ॥ १७ ॥

वेणीकृतान् कुञ्चितसूक्ष्मकेशान्
　　चूडामणिमुज्ज्वल-पत्रपाश्याम् ।
वक्रालकान् सत्तिलकं ललाटं
　　भ्रुवौ दृशावञ्जन-रञ्जिताभे ॥१८॥

श्रुतिद्वयं कुण्डलमंजु चक्री-
　　शलाकिके गण्डतले मकर्यौ ।
नासां समुक्तामरुणाधरोष्ठौ
　　दन्तार्चिषः सच्चिबुकं सबिन्दुम् ॥ १९ ॥

कण्ठं त्रिरेखं क्रमलंबमानान्
हारान् नतांसौ भुज-साङ्गदत्वम् ।
कफोणिके कङ्कणचूडिकाढ्ये
सुलक्ष्मरेखारुण-पाणिपद्मे ॥ २० ॥

रत्नोर्मिका अंगुलिका नखश्री-
श्रिताः कुचौ कञ्चुलिकारुणाभौ ।
निष्कं दलाभोदर-रोमपंक्ती-
र्नाभिं कृशं मध्यमुतं त्रिवल्या ॥ २१ ॥

चित्रान्तरीयोपरि नीलशाटी
मुरुद्वयं जानुयुगं च जंघे ।
गुल्फद्वयं हंसक-नूपुर-श्री-
भूतोर्मिका अंगुलिका नखांश्च ॥ २२ ॥

अरे मनश्चिन्तय राधिकाया
वामे पदेऽङ्गुष्ठतले यवारी ।
प्रदेशिनी-सन्धिभागूर्ध्वरेखा-
माकुञ्चितामाचरणार्धमेव ॥ २३ ॥

मध्यातलेऽब्ज-ध्वज-पुष्प-वल्लीः
कनिष्ठिकाधोऽङ्कुशमेकमेव ।
चक्रस्य मूले वलयातपत्रे
पार्ष्णौ तु चन्द्रार्धमथान्यपादे ॥ २४ ॥

पार्ष्णौ झषं स्यन्दनशैलमूर्ध्वे
तत्पार्श्वयोः शक्तिपदे च शंखम् ।
अंगुष्ठमूलेऽथ कनिष्ठिकाधो
वेदीमधः कुण्डलमेव तस्याः ॥ २५ ॥

पदोस्तले पार्ष्णियुग्मं च शोणं
रत्नोर्मिका रक्तनखांगुलीश्च ।
मञ्जीरयुग्मं तनु-गुल्फ-जंघा-
जानूरुशोभा जघनं नितम्बम् ॥ २६ ॥

वासः ससूत्रं मणिमेखलां च
नाभिं दलाभोदर-रोमवल्ल्यौ ।
पीनौ कुचौ कंचुलिकाञ्चितौ च
कण्ठं त्रिरेखं मणिहेमहारान् ॥ २७ ॥

स्कन्धौ नतावङ्गदिनौ भुजौ श्री-
भरौ कफोणी मणिबन्धयुग्मम् ।
विचित्र-चूडामणि-कङ्कणाढ्यं
शोणे कराब्जे मृदुलांगुलीश्च ॥ २८ ॥

रत्नोर्मिकास्ताः सुनखेन्दुखण्डान्
सश्यामबिन्दुं चिबुकं मुखाब्जम् ।
ओष्ठाधरौ गण्डयुगं सचित्रं
कर्णौ लसत्कुण्डल-चक्रिकाढ्यौ ॥ २९ ॥

नासां मणिमौक्तिक-भूषितां दृग्-
द्वयं लसत्कज्ज्वलमुच्छलन्तौ ।
भ्रुवौ ललाटं तिलकं च पत्र-
पाश्यां सुवक्रालक-लोलिमानम् ॥ ३० ॥

सीमन्तरेखां स्मर चित्रचूडा-
मणिं प्रसूनावलि-गुंफचित्राम् ।
वेणीं त्रिवेणीमिव बालपाश्यां
विराजदग्रामथ मन्दहास्यम् ॥ ३१ ॥

श्रीराधिकामाधव-रूपचिन्ता-
मणौ मनो द्वित्रिरथो चतुर्वा ।
आवर्तयेद्यो धृतिमान् पठन् स
प्राप्नोति तद्दर्शनमाशु साक्षात् ॥ ३२ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितः
श्रीरूपचिन्तामणिः संपूर्णः ।

# श्रीकार्पण्यपञ्जिकास्तोत्रम् ।

तिष्ठन्वृन्दाटवीकुञ्जे विज्ञप्तिं विदधात्यसौ ।
वृन्दाटवीशयोः पादपद्मेषु कृपणो जनः ॥ १ ॥

नवेन्दीवरसंदोहसौन्दर्यास्कन्दनप्रभम् ।
चारुगोरोचनागर्वगौरवग्रासिगौरभाम् ॥ २ ॥

शातकुम्भकदम्बश्रीविडम्बिस्फुरदम्बरम् ।
हरता किंशुकस्यांशूनंशुकेन विराजिताम् ॥ ३ ॥

सर्वकैशोरवद्वृन्दचूडारूढहरिन्मणिम् ।
गोष्ठाशेषकिशोरीणां धम्मिल्लोत्तंसमालिकाम् ॥ ४ ॥

श्रीशामुख्यात्मरूपाणां रूपातिशायिविग्रहम् ।
रमोज्ज्वलव्रजवधूव्रजविस्मापिसौष्ठवाम् ॥ ५ ॥

सौरभ्यहृतगान्धर्वं गन्धोन्मादितमाधवाम् ।
राधारोधनवंशीकं महतीमोहिताच्युताम् ॥ ६ ॥

राधाधृतिधनस्तेनलोचनाञ्चलचापलम् ।
दृगञ्चलकलाभृङ्गीदष्टकृष्णहृदम्बुजाम् ॥ ७ ॥

राधागूढपरीहासप्रौढिनिर्वचनीकृतम् ।
व्रजेन्द्रसुतनर्मोक्तिरोमाञ्चिततनूलताम् ॥ ८ ॥

दिव्यसद्गुणमाणिक्यश्रेणिरोहणपर्वतम् ।
उमादिरमणीव्यूहस्पृहणीयगुणोत्कराम् ॥ ९ ॥

त्वां च वृन्दावनाधीश ! त्वां च वृन्दावनेश्वरि !
काकुभिर्वन्दमानोऽयं मन्दः प्रार्थयते जनः ॥१०॥

( दशभिः कुलकम् )

योग्यता मे न काचिद्वां कृपालाभाय यद्यपि ।
महाकृपालुमौलित्वात्तथापि कुरुतं कृपाम् ॥ ११ ॥

अयोग्येऽप्यपराद्धेऽपि दृश्यन्ते कृपयाकुलाः ।
महाकृपालवो हन्त लोके लोकेशवन्दितौ ॥ १२ ॥

भक्तेर्वां करुणाहेतोर्लेशाभासोऽपि नास्ति मे ।
महालीलेश्वरतया तदप्यत्र प्रसीदतम् ॥ १३ ॥

जने दुष्टेऽप्यसक्तेऽपि प्रसीदन्तो विलोकिताः ।
महालीला महेशाश्च हा नाथौ बहवो भुवि ॥ १४ ॥

अधमोऽप्युत्तमं मत्वा स्वमज्ञोऽपि मनीषिणम् ।
शिष्टं दुष्टोऽप्ययं जन्तुर्मन्तुं व्यधित यद्यपि ॥ १५ ॥

तथाप्यस्मिन्कदाचिद्वामधीशौ नामजल्पिनि ।
अवद्यवृन्दनिस्तारिनामाभासौ प्रसीदतम् ॥ १६ ॥

यदक्षम्यं नु युवयोः सकृद्भक्तिलवादपि ।
तदागः क्वापि नास्त्येव कृत्वाशां प्रार्थये ततः ॥ १७ ॥

हन्त क्लीबोऽपि जीवोऽयं नीतः कष्टेन धृष्टताम् ।
मुहुः प्रार्थयते नाथौ प्रसादः कोऽप्युदञ्चतु ॥१८॥

एष पापी रुदन्नुच्चैरादाय रदनैस्तृणम्।
हा नाथौ नाथति प्राणी सीदत्यत्र प्रसीदतम् ॥ १९ ॥

हाहारावमसौ कुर्वन्दुर्भगो भिक्षते जनः।
एतां मे शृणुतं काकुं काकुं शृणुतमीश्वरौ ॥ २० ॥

याचे फूत्कृत्य फूत्कृत्य हा हा काकुभिराकुलः।
प्रसीदतमयो येऽपि जनेऽस्मिन्करुणार्णवौ ॥ २१ ॥

क्रोशत्यार्तस्वरैरास्ये न्यस्यांगुष्ठमसौ जनः।
कुरुतं कुरुतं नाथौ करुणाकणिकामपि ॥ २२ ॥

वाचेह दीनया याचे साक्रन्दमतिमन्दधीः।
किरतं करुणस्वान्तौ करुणोर्मिच्छटामपि ॥ २३ ॥

मधुराः सन्ति यावन्तो भावाः सर्वत्र चेतसः।
तेभ्योऽपि मधुरं प्रेम प्रसादीकुरुतं निजम् ॥ २४ ॥

सेवामेवाद्य वां देवावीहे किंचन नापरम्।
प्रसादाभिमुखौ हन्त भवन्तौ भवतां मयि ॥ २५ ॥

नाथितं परमेवेदमनाथजनवत्सलौ।
स्वं साक्षाद्दास्यमेवास्मिन्प्रसादीकुरुतं जने ॥ २६ ॥

अञ्जलिं मूर्ध्नि विन्यस्य दीनोऽयं भिक्षते जनः।
अस्य सिद्धिरभीष्टस्य सकृदप्युपपाद्यताम् ॥ २७ ॥

अमलो वां परिमलः कदा परिमिलन्वने।
अनर्घेण प्रमोदेन घ्राणं मे घूर्णयिष्यति ? २८ ॥

रञ्जयिष्यति कर्णौ मे हंसगुञ्जितगञ्जनम्।
मंजुलं किं नु युवयोर्मञ्जीरकलसिञ्जितम् ? २९ ॥

सौभाग्याङ्कुरथाङ्गादिलक्षितानि पदानि वाम् ।
कदा वृन्दावने पश्यन्नुन्मदिष्यत्ययं जनः ? ३० ॥

सर्वसौन्दर्यमर्यादानीराज्यपदनीरजौ ।
किमपूर्वाणि पर्वाणि हा ममाक्ष्णोर्विधास्यथ ? ३१ ॥

सुचिराशाफलाभोगपदाम्भोजविलोकनौ ।
युवां साक्षाज्जनस्यास्य भवेतामिह किं भवे ? ३२ ॥

कदा वृन्दाटवीकुञ्जकन्दरे सुन्दरोदयौ ।
खेलन्तौ वां विलोकिष्ये सुरतौ नातिदूरतः ? ३३ ॥

गुर्वायत्ततया क्वापि दुर्लभान्योऽन्यवीक्षणौ ।
मिथः संदेशशीधुभ्यां नन्दयिष्यामि वां कदा ? ३४॥

गवेषयन्तावन्योऽन्यं कदा वृन्दावनान्तरे ।
संगमय्य युवां लप्स्ये हारिणं पारितोषिकम् ? ३५ ॥

पणीकृतमिथोहारलुञ्चनव्यग्रहस्तयोः ।
कलिं द्यूते विलोकिष्ये कदा वां जितकाशिनोः ?३६ ॥

कुञ्जे कुसुमशय्यायां कदा वामर्पिताङ्गयोः ।
पादसंवाहनं हन्त जनोऽयं रचयिष्यति ? ३७ ॥

कन्दर्पकलहोद्घट्टत्रुटितानां लतागृहे ।
कदा गुम्फाय हाराणां भवन्तौ मां नियोक्ष्यतः ? ३८ ॥

केलिकल्लोलविस्रस्तान्हन्त वृन्दावनेश्वरौ ।
कर्हि बर्हिपतत्रैर्वां मण्डयिष्यामि कुन्तलान् ? ३९ ॥

कन्दर्पकेलिपाण्डित्यखण्डिताकल्पयोरहम् ।
कदा वामलिकद्वन्द्वं करिष्ये तिलकोज्ज्वलम् ? ४० ॥

देवोरस्ते वनस्रग्भिर्दृशौ ते देवि कज्जलैः ।
अयं जनः कदा कुञ्जमण्डपे मण्डयिष्यति ? ४१ ॥

जाम्बूनदाभताम्बूलीपर्णान्यवदलय्य वाम् ।
वदनाम्बुजयोरेष निधास्यति जनः कदा ? ४२ ॥

क्वासौ दुष्कृतकर्माहं क्व वामभ्यर्थनेदृशी ?
किं वा कं वा न युवयोरुन्मादयति माधुरी ? ४३ ॥

यया वृन्दावने जन्तुरनर्होऽप्येष वास्यते ।
तयैव कृपया नाथौ सिद्धिं कुरुतमीप्सितम् ॥ ४४ ॥

कार्पण्यपञ्जिकामेतां सदा वृन्दाटवीनटौ ।
गिरैव जल्पतोऽप्यस्य जन्तोः सिध्यतु वाञ्छितम् ॥४५॥

इति श्रीमद्रूपगोस्वामिविरचित—स्तवमालायां
श्रीकार्पण्यपञ्जिकास्तोत्रं संपूर्णम् ।

# श्रीउत्कलिकावल्लरिः ।

प्रपद्य वृन्दावनमध्यमेकः क्रोशन्नसावुत्कलिकाकुलात्मा ।
उद्घाटयामि ज्वलतः कठोरां बाष्पस्य मुद्रां हृदि मुद्रितस्य॥ १ ॥

अये वृन्दारण्यत्वरितमिह ते सेवनपराः
परामापुः के वा न किल परमानन्दपदवीम् ?
अतो नीचैर्याचे स्वयमधिपयोरीक्षणविधे-
र्वरेण्यां मे चेतस्युपदिश दिशं हा कुरु कृपाम् ॥ २ ॥

तवारण्ये देवि ध्रुवमिह मुरारिर्विहरते
सदा प्रेयस्येति श्रुतिरपि विरौति स्मृतिरपि ।

इति ज्ञात्वा वृन्दे चरणमभिवन्दे तव कृपां
कुरुष्व क्षिप्रं मे फलतु नितरां तर्षविटपी ॥ ३ ॥

हृदि चिरवसदाशामण्डलालम्बपादौ
गुणवति तव नाथौ नाथितुं जन्तुरेषः ।
सपदि भवदनुज्ञां याचते देवि वृन्दे
मयि किर करुणार्द्रां दृष्टिमत्र प्रसीद ॥ ४ ॥

दधतं वपुरंशुकन्दलीं दलदिन्दीवरवृन्दबन्धुराम् ।
कृतकाञ्चनकान्तिवञ्चनैः स्फुरितां चारुमरीचिसंचयैः ॥ ५ ॥

निचितं घनचञ्चलाततेरनुकूलेन दुकूलरोचिषा ।
मृगनाभिरुचः सनाभिना महितां मोहनपट्टवाससा ॥ ६ ॥

माधुरीं प्रकटयन्तमुज्ज्वलां श्रीपतेरपि वरिष्ठसौष्ठवाम् ।
इन्दिरामधुरगोष्ठसुन्दरीवृन्दविस्मयकरप्रभोन्नताम् ॥ ७ ॥

इतरजनसुदुर्घटोदयस्य स्थिरगुणरत्नचयस्य रोहणाद्रिम् ।
अखिलगुणवतीकदम्बचेतःप्रचुरचमत्कृतिकारिसद्गुणाढ्याम् ॥ ८ ॥

निस्तुलव्रजकिशोरमण्डलीमौलिमण्डनहरिन्मणीश्वरम् ।
विश्वविस्फुरितगोकुलोल्लसन्नव्ययौवतवतंसमालिकाम् ॥ ९ ॥

स्वान्तसिन्धुमकरीकृतराधं हृन्निशाकरकुरङ्गितकृष्णाम् ।
प्रेयसीपरिमलोन्मदचित्तं प्रेष्ठसौरभहृतेन्द्रियवर्गाम् ॥१०॥

प्रेममूर्तिवरकार्तिकदेवीकीर्तिगानमुखरीकृतवंशम् ।
विश्वनन्दनमुकुन्दसमज्ञावृन्दकीर्तनरसज्ञरसज्ञाम् ॥११॥

नयनकमलमाधुरीनिरुद्धव्रजनवयौवतमौलिहृन्मरालम् ।
व्रजपतिसुतचित्तमीनराजग्रहणपटिष्ठविलोचनान्तजालाम् ॥१२॥

गोपेन्द्रमित्रतनयाध्रुवधैर्यसिन्धु-
पानक्रियाकलससंभववेणुनादम् ।
विद्यामहिष्ठमहतीमहनीयगान-
संमोहिताखिलविमोहनहृत्कुरङ्गाम् ॥१३॥

काप्यानुषङ्गिकतयोदितराधिकाख्या-
विस्मारिताखिलविलासकलाकलापम् ।
कृष्णेति वर्णयुगलश्रवणानुबन्ध-
प्रादुर्भवज्जडिमडम्बरसंवृताङ्गीम् ॥१४॥

त्वां च बल्लवपुरंदरात्मज त्वां च गोकुलवरेण्यनन्दिनि ।
एष मूर्ध्नि रचिताञ्जलिर्नमन्भिक्षते किमपि दुर्भगो जनः ॥१५॥
( एकादशभिः कुलकम् )

हन्त सान्द्रकरुणासुधाझरीपूर्णमानसहृदौ प्रसीदतम् ।
दुर्जनेऽत्र दिशतं रतेर्निजप्रेक्षणप्रतिभुवश्छटामपि ॥१६॥

श्यामयोर्नववयःसुषमाभ्यां गौरयोरमलकान्तियशोभ्याम् ।
कापि वामखिलवल्गुवतंसौ माधुरी हृदि सदा स्फुरतान्मे ॥१७॥

सर्वबल्लववरेण्यकुमारौ प्रार्थये बत युवां प्रणिपत्य ।
लीलया वितरतं निजदास्यं लीलया वितरतं निजदास्यम् ॥१८॥

प्रणिपत्य भवन्तमर्थये पशुपालेन्द्रकुमार काकुभिः ।
व्रजयौवतमौलिमालिकाकरुणापात्रमिमं जनं कुरु ॥१९॥

भवतीमभिवाद्य चाटुभिर्वरमूर्जेश्वरि वर्यमर्थये ।
भवदीयतया कृपां यथा मयि कुर्यादधिकां बकान्तकः ॥२०॥

दिशि विदिशि विहारमाचरन्तः सह पशुपालवरेण्यनन्दनाभ्याम् ।
प्रणयिजनगणास्तयोः कुरुध्वं मयि करुणां बत काकुमाकलय्य ॥२१॥

गिरिकुञ्जकुटीरनागरौ ललिते देवि सदा तवाश्रवौ ।
इति ते किल नास्ति दुष्करं कृपयाङ्गीकुरु मामतः स्वयम् ॥२२॥

भाजनं वरमिहासि विशाखे गौरनीलवपुषोः प्रणयानाम् ।
त्वं निजप्रणयिनोर्मयि तेन प्रापयस्व करुणार्द्रकटाक्षम् ॥२३॥

सुबल बल्लववर्यकुमारयोर्दयितनर्मसखस्त्वमसि व्रजे ।
इति तयोः पुरतो विधुरं जनं क्षणममुं कृपयाद्य निवेदय ॥२४॥

शृणुत कृपया हन्त प्राणेशयोः प्रणयोद्धुराः
　　किमपि यदयं दीनः प्राणी निवेदयति क्षणम् ।
प्रवणितमनाः किं युष्माभिः समं तिलमप्यसौ
　　युगपदनयोः सेवां प्रेम्णा कदापि विधास्यति ? २५॥

क्व जनोऽयमतीव पामरः क्व दुरापं रतिभाग्भिरप्यदः ?
इयमुल्ललयत्यजर्जरा गुरुरुत्तर्षधुरा तथापि माम् ॥२६॥

ध्वस्तब्रह्ममरालकूजितभरैरूर्जेश्वरीनूपुर-
　　क्वाणैरूर्जितवैभवस्तव विभो वंशीप्रसूतः कलः ।
लब्धः शस्तसमस्तनादनगरीसाम्राज्यलक्ष्मीं परा-
　　माराध्यः प्रमदात्कदा श्रवणयोर्द्वन्द्वेन मन्देन मे ? २७॥

स्तम्भं प्रपञ्चयति यः शिखिपिञ्छमौलि-
　　वेणोरपि प्रबलयन्स्वरभङ्गमुच्चैः ।
नादः कदा क्षणमवाप्स्यति ते महत्या
　　वृन्दावनेश्वरि स मे श्रवणातिथित्वम् ? २८॥

कस्य संभवति हा तदहर्वा यत्र वां प्रभुवरौ कलगीतिः ।
उन्नमन्मधुरिमोर्मिसमृद्धा दुष्कृतं श्रवणयोर्विधुनोति ? २९॥

परिमलसरणिर्वां गौरनीलाङ्गराज-
न्मृगमदघुसृणानुग्राहिणी नागरेशौ ।
स्वमहिमपरमाणुप्रावृताशेषगन्धा
किमिह मम भवित्री घ्राणभृङ्गोत्सवाय ? ३०॥

प्रदेशिनीं मुखकुहरे विनिक्षिपन्जनो मुहुर्वनभुवि फूत्करोत्यसौ ।
प्रसीदतं क्षणमधिपौ प्रसीदतं दृशोः पुरः स्फुरतु तडिद्घनच्छविः॥३१

व्रजमधुरजनव्रजावतंसौ किमपि युवामभियाचते जनोऽयम् ।
मम नयनचमत्कृतिं करोतु क्षणमपि पादनखेन्दुकौमुदी वाम् ॥३२॥

अतर्कितसमीक्षणोल्लसितया मुदाश्लिष्यतो-
र्निकुञ्जभवनाङ्गणे स्फुरितगौरनीलाङ्गयोः ।
रुचः प्रचुरयन्तु वां पुरटयूथिकामञ्जरी-
विराजदलिरम्ययोर्मम चमत्कृतिं चक्षुषोः ॥३३॥

साक्षात्कृतिं बत ययोर्न महत्तमोऽपि
कर्तुं मनस्यपि मनाक्प्रभुतामुपैति ।
इच्छन्नयं नयनयोः पथि तौ भवन्तौ
जन्तुर्विजित्य निजगार भियं ह्रियं च ॥३४॥

अथवा मम किं नु दूषणं बत वृन्दावनचक्रवर्तिनौ ।
युवयोर्गुणमाधुरी नवा जनमुन्मादयतीह कं न वा ? ३५॥

अहह समयः सोऽपि क्षेमो घटेत नरस्य किं
व्रजनटवरौ यत्रोद्दीप्ता कृपासुधयोज्ज्वला ।
कृतपरिजनश्रेणिचेतश्चकोरचमत्कृति-
र्व्रजति युवयोः सा वक्त्रेन्दुद्वयी नयनाध्वनि ? ३६॥

प्रियजनकृतपार्ष्णिग्राहचर्योन्नताभिः
सुगहनघटनाभिर्वक्रिमाडम्बरेण ।
प्रणयकलहकेलिक्ष्वेलिभिर्वामधीशौ
किमिह रचयितव्यः कर्णयोर्विस्मयो मे ? ३७॥

निभृतमपहृतायामेतया वंशिकायां
दिशि दिशि दृशमुक्तां प्रेर्य संपृच्छमानः ।
स्मितशबलमुखीभिर्विप्रलब्धः सखीभि-
स्त्वमघहर कदा मे तुष्टिमक्ष्णोर्विधत्से ? ३८॥

क्षतमधरदलस्य स्वस्य कृत्वा त्वदाली-
कृतमिति ललितायां देवि कृष्णे ब्रुवाणे ।
स्मितशबलदृगन्ता किंचिदुत्तम्भितभ्रू-
र्मम मुदमुपधास्यत्यास्यलक्ष्मीः कदा ते ? ३९॥

कथमिदमपि वाञ्छितुं निकृष्टः स्फुटमयमर्हति जन्तुरुत्तमार्हम् ।
गुरुलघुगणनोज्झितार्तनाथौ जयतितरामथवा कृपाद्युतिर्वाम् ॥४०॥

वृत्तो दैवाद्व्रजपतिसुहृन्नन्दिनीविप्रलम्भे
संरम्भेणोल्लसितललिताशङ्कयोद्भ्रान्तनेत्रः ।
त्वं शारीभिः समयपटुभिर्द्रागुपालभ्यमानः
कामं दामोदर मम कदा मोदमक्ष्णोर्विधाता ?४१॥

रासारम्भे विलसति परित्यज्य गोष्ठाम्बुजाक्षी-
वृन्दं वृन्दावनभुवि रहः केशवेनोपनीय ।
त्वां स्वाधीनप्रियतमपदप्रापणेनार्चिताङ्गीं
दूरे दृष्ट्वा हृदि किमचिरादर्पयिष्यामि दर्पम् ?४२॥

रम्या शोणद्युतिभिरलकैर्यावकेनोर्जदेव्याः
सद्यस्तन्द्रीमुकुलदलसक्लान्तनेत्रा व्रजेश ।

प्रातश्चन्द्रावलीपरिजनैः साचि दृष्टा विवर्णै-
रास्यश्रीस्ते प्रणयति कदा संमदं मे मुदं च ? ४३ ॥

व्यात्युक्षीरभसोत्सवेऽधरसुधापानग्लहे प्रस्तुते
जित्वा पातुमथोत्सुकेन हरिणा कण्ठे धृतायाः पुरः ।
ईषच्छोणिममीलिताक्षमनृजुभ्रूवल्लिहेलोन्नतं
प्रेक्षिष्ये तव सस्मितं सरुदितं तद्देवि वक्त्रं कदा ? ४४ ॥

आलीभिः सममभ्युपेत्य शनकैर्गान्धर्विकायां मुदा
गोष्ठाधीशकुमार हन्त कुसुमश्रेणीं हरन्त्यां तव ।
प्रेक्षिष्ये पुरतः प्रविश्य सहसा गूढस्मितास्यं बला-
दाच्छिन्दानमिहोत्तरीयमुरसस्त्वां भानुमत्याः कदा ?४५॥

उदञ्चति मधूत्सवे सहचरीकुलेनाकुले
कदा त्वमवलोक्यसे व्रजपुरंदरस्यात्मज ।
स्मितोज्ज्वलमदीश्वरीचलदृगञ्चलप्रेरणा-
न्निलीनगुणमञ्जरीवदनमत्र चुम्बन्मया ? ४६ ॥

कलिन्दतनयातटीवनविहारतः श्रान्तयोः
स्फुरन्मधुरमाधवीसदनसीम्नि विश्राम्यतोः ।
विमुच्य रचयिष्यते स्वकचवृन्दमत्रामुना
जनेन युवयोः कदा पदसरोजसंमार्जनम् ? ४७ ॥

परिमिलदुपबर्हं पल्लवश्रेणिभिर्वा
मदनसमरचर्याभारपर्याप्तमत्र ।
मृदुभिरमलपुष्पैः कल्पयिष्यामि तल्पं
भ्रमरयुजि निकुंजे हा कदा कुञ्जराजौ ? ४८ ॥

अलिद्युतिभिराहृतैर्मिहिरनन्दिनीनिर्झरा-
त्पुरः पुरटझर्झरीपरिभृतैः पयोभिर्मया ।

निजप्रणयिभिर्जनैः सह विधास्यते वां कदा
विलासशयनस्थयोरिह पदाम्बुजक्षालनम् ? ४९ ॥

लीलातल्पे कलितवपुषोर्व्यावहासीमनल्पां
स्मित्वा स्मित्वा जयकलनया कुर्वतोः कौतुकाय ।
मध्येकुञ्जं किमिह युवयोः कल्पयिष्याम्यधीशौ
संध्यारम्भे लघु लघु पदाम्भोजसंवाहनानि ? ५० ॥

प्रमदमदनयुद्धारम्भसंभावुकाभ्यां
प्रमुदितहृदयाभ्यां हन्त वृन्दावनेशौ ।
किमहमिह युवाभ्यां पानलीलोन्मुखाभ्यां
चषकमुपहरिष्ये साधुमाध्वीकपूर्णम् ? ५१ ॥

कदाहं सेविष्ये व्रततिचमरीचामरमरु-
द्विनोदेन क्रीडाकुसुमशयने न्यस्तवपुषौ ।
दरोन्मीलन्नेत्रौ श्रमजलकणक्लिद्यदलकौ
ब्रुवाणावन्योऽन्यं व्रजनवयुवानाविह युवाम् ? ५२ ॥

च्युतशिखरशिखण्डां किंचिदुत्स्रंसमानां
विलुठदमलपुष्पश्रेणिमुन्मुच्य चूडाम् ।
दनुजदमन देव्याः शिक्षया ते कदाहं
कमलकलितकोटिं कल्पयिष्यामि वेणीम् ? ५३ ॥

कमलमुखि विलासैरंसयोः स्रंसितानां
तुलितशिखिकलापं कुन्तलानां कलापम् ।
तव कबरतयाविर्भाव्य मोदात्कदाहं
विकचविचकिलानां मालयालंकरिष्ये ? ५४ ॥

मिथःस्पर्धाबद्धे बलवति वलत्यक्षकलहे
व्रजेश त्वां जित्वा व्रजयुवतिधम्मिल्लमणिना ।

दृगन्तेन क्षिप्ताः पणमिह कुरङ्गं तव कदा
ग्रहीष्यामो बद्ध्वा कलयति वयं त्वत्प्रियगणे ? ५५ ॥

किं भविष्यति शुभः स वासरो यत्र देवि नयनाञ्चलेन माम् ।
गर्वितं विहसितुं नियोक्ष्यसे द्यूतसंसदि विजित्य माधवम् ? ५६ ॥

किं जनस्य भविताऽस्य तद्दिनं यत्र नाथ मुहुरेनमादृतः ।
त्वं व्रजेश्वरवयस्यनन्दिनीमानभङ्गविधिमर्थयिष्यसे ? ५७ ॥

त्वदादेश्यं शारीकथितमहमाकर्ण्य मुदितो
वसामि त्वत्कुण्डोपरि सखि विलम्बस्तव कथम् ?
इतीदं श्रीदामस्वसरि मम संदेशकुसुमं
हरेति त्वं दामोदर जनममुं नोत्स्यसि कदा ? ५८ ॥

शठोऽयं नावेक्ष्यः पुनरिह मया मानधनया
विशन्तं स्त्रीवेशं सुबलसुहृदं वारय गिरा ।
इदं ते साकूतं वचनमवधार्योच्छलितधी-
श्छलाटोपैर्गोपप्रवरमवरोत्स्यामि किमहम् ? ५९ ॥

अघहर बलीवर्दः प्रेयान्नवस्तव यो व्रजे
वृषभवपुषा दैत्येनासौ बलादभियुज्यते ।
इति किल मृषा गीर्भिश्चन्द्रावलीनिलयस्थितं
वनभुवि कदा नेष्यामि त्वां मुकुन्द मदीश्वरीम् ? ६० ॥

निगिरति जगदुच्चैः सूचिभेद्ये तमिस्रे
भ्रमररुचिनिचोलेनाङ्गमावृत्य दीप्रम् ।
परिहृतमणिकाञ्चीनूपुरायाः कदाहं
तव नवमभिसारं कारयिष्यामि देवि ? ६१ ॥

आस्ये देव्याः कथमपि मुदा न्यस्तमास्यात्त्वयेश
क्षिप्तं पर्णे प्रणयजनिताद्देवि वाम्यात्त्वयाग्रे ।

आकूतज्ञस्तदतिनिभृतं चर्वितं खर्विताङ्ग-
स्ताम्बूलीयं रसयति जनः फुल्लरोमा कदायम् ? ६२ ॥

परस्परमपश्यतोः प्रणयमानिनोर्वां कदा
धृतोत्कलिकयोरपि स्वमभिरक्षतोराग्रहम् ।
द्वयोः स्मितमुदञ्चये नुदसि किं मुकुन्दामुना
दृगन्तनटनेन मामुपरमेत्यलीकोक्तिभिः ? ६३ ॥

कदाप्यवसरः स मे किमु भविष्यति स्वामिनौ
जनोऽयमनुरागतः पृथुनि यत्र कुञ्जोदरे ।
त्वया सह तवालिके विविधवर्णगन्धद्रवै-
श्चिरं विरचयिष्यति प्रकटपत्रवल्लीश्रियम् ? ६४ ॥

इदं सेवाभाग्यं भवति सुलभं येन युवयो-
श्छटाप्यस्य प्रेम्णः स्फुरति नहि सुप्तावपि मम ।
पदार्थेऽस्मिन्युष्मद्व्रजमनुनिवासेन जनित-
स्तथाप्याशाबन्धः परिवृढवरौ मां द्रढयति ॥ ६५ ॥

प्रपद्य भवदीयतां कलितनिर्मलप्रेमभि-
र्महद्भिरपि काम्यते किमपि यत्र तार्णं जनुः ।
कृतात्र कुजनेरपि व्रजवने स्थितिर्मे यया
कृपां कृपणगामिनीं सदसि नौमि तामेव वाम् ॥ ६६ ॥

माधव्या मधुराङ्ग काननपदप्राप्ताधिराज्यश्रिया
वृन्दारण्यविकासिसौरभतते तापिच्छकल्पद्रुम ।
नोत्तापं जगदेव यस्य भजते कीर्तिच्छटाच्छायया
चित्रा तस्य तवांघ्रिसंनिधिजुषां किंवा फलाप्तिर्नृणाम् ? ६७॥

त्वल्लीलामधुकुल्ययोल्लसितया कृष्णाम्बुदस्यामृतैः
श्रीवृन्दावनकल्पवल्लि परितः सौरभ्यविस्फारया ।

माधुर्येण समस्तमेव पृथुना ब्रह्माण्डमाप्यायितं
नाश्चर्यं भुवि लब्धपादरजसां पर्वोन्नतिर्वीरुधाम् ॥ ६८ ॥

पशुपालवरेण्यनन्दनौ वरमेतं मुहुरर्थये युवाम् ।
भवतु प्रणयो भवे भवे भवतोरेव पदाम्बुजेषु मे ॥ ६९ ॥

उद्गीर्णाभूदुत्कलिकावल्लरिरग्रे
वृन्दाटव्यां नित्यविलासव्रतयोर्वाम् ।
वाङ्मात्रेण व्याहरतोऽप्युल्ललमेता-
माकर्ण्येशौ कामितसिद्धिं कुरुतं मे ॥ ७० ॥

चन्द्राश्वभुवने शाके पौषे गोकुलवासिना ।
इयमुत्कलिकापूर्वा वल्लरी निर्मिता मया ॥ ७१ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीउत्कलिकावल्लरिः संपूर्णा ।

## श्रीनिकुञ्जरहस्यस्तवः ।

नव-ललित-वयस्कौ नूतन-लावण्य-पुञ्जौ
नवरस-चलचित्तौ नूतन-प्रेमवृत्तौ ।
नव-निधुवन-लीला-कौतुकेनाति-लोलौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥ १ ॥

द्रुत-कनक-सुगौर-स्निग्ध-मेघौघ-नील-
च्छविभिरखिल-वृन्दारण्यमुद्भासयन्तौ ।
मृदुल-नव-दुकूले नीलपीते दधानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥ २ ॥

प्रथम–मिलन–भीतोद्भासिताश्वास–वाचौ
प्रियतम–भुजरोध–व्यग्रहस्तौ रतोत्कौ ।
अलमलमिति लीला गद्गदोक्त्युन्मदान्धौ
स्मर निभृत–निकुञ्जे राधिका–कृष्णचन्द्रौ ॥ ३ ॥

प्रिय–रति–समनुज्ञा–मार्गणानम्र–वक्त्रो–
न्नमित–चिबुक–दृष्ट्यास्मेर–कान्ताननाब्जौ ।
किमिह कुरुष इत्यास्वाद्य–वाक्किञ्चनोक्ती
स्मर निभृत–निकुञ्जे राधिका–कृष्णचन्द्रौ ॥ ४ ॥

प्रतिपद–प्रतिकूलानुग्रह–व्यग्रमूर्ती
बहु विरचित–नाना चाटुकार–प्रकारौ ।
नव–सुरत–विलासौत्सुक्य–गूढप्रकाशौ
स्मर निभृत–निकुञ्जे राधिका–कृष्णचन्द्रौ ॥ ५ ॥

सुरत–कलह–सौख्यैः काकुवाद–प्रणामा–
धिक–विरचित–मान्यौ दुर्गम–प्रेमभङ्गौ ।
स्मित–मधुर–मृदूपालम्भ–हृन्नीत–कान्तौ
स्मर निभृत–निकुञ्जे राधिका–कृष्णचन्द्रौ ॥ ६ ॥

नव–किशलय–तल्पे कल्पयन्तौ विचित्रां
सुरत–समर–लीलामुन्मदानङ्ग–रङ्गौ ।
ललित–वलय–काञ्ची–नूपुर–ध्वान–रम्यौ
स्मर निभृत–निकुञ्जे राधिका–कृष्णचन्द्रौ ॥ ७ ॥

प्रिय–कर–परिमर्दोज्जृम्भमानोरु–वक्षो–
रुह–मनसिज–कण्डूद्दण्ड–कन्दर्प–लोलौ ।
नमित–दयित–पाणि–स्पृष्ट–नीवीनिबन्धौ
स्मर निभृत–निकुञ्जे राधिका–कृष्णचन्द्रौ ॥ ८ ॥

प्रियतम-कृत-गाढाश्लेष-खर्वायितोरु-
स्तन-मुकुल-मनोज्ञौ वल्लभैकात्मतेच्छू।
किमपि रचित-शुष्क-क्रन्दितोदार-हासौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥ ९ ॥

सतत-सुरत-तृष्णाव्याकुलावुन्मदिष्णू
विपुल-पुलक-राजद्गौर-नीलोज्ज्वलाङ्गौ।
मिथ उरु-परिरम्भादेक-देहायमानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१०॥

सततमपरिमाणोज्जृम्भमानानुरागौ
मदरस-भरसिन्धू लोल-दोलायिताङ्गौ।
दलित-सकल-सेतू धन्य-गोप्येकरम्यौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥११॥

विलुलित-वर-वेणी-हार-मालावतंसौ
मृदुल-मधुर-हासोल्लासि-वक्त्रेन्दुबिम्बौ।
अतिरस-मदलोलौ चित्र-कन्दर्पकेली
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१२॥

सुरत-रस-मदाब्धौ सन्ततं सन्तरन्तौ
त्रुटित-वलय-काञ्ची-दाम-हारावलीकौ।
मणि-कनक-विभूषोत्सार-भास्वत्-पराङ्गौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१३॥

स्तबकित-मणिदाम्ना प्रेयसा गुम्फितात्य-
द्भुत-सुललित-वेणी-प्रेयसी-क्लृप्त-चूडौ।
मिथ उदयदखण्डप्रेम-रज्जू-विबद्धौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१४॥

जघन-तुलित-वेणी-विस्फुरत्-बर्हचूडौ
कनक-रुचिर-चूडा-कङ्कण-द्वन्द्वपाणी ।
विलसदरुण-रोचिः-पीत-कौषेय-वासौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१५॥

कनक-जलद-गात्रौ नील-शोणाब्ज-नेत्रौ
मृगमद-रस-भालौ मालती-कुन्द-मालौ ।
तरल-तरुण-वेशौ नील-पीताम्बरेशौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१६॥

ललित-नव-किशोरौ नव्य-लावण्य-पुञ्जौ
सकल-रसिक-चूडालंकृती मुग्ध-वेशौ ।
मधुर-मधुर-मूर्ती विद्युदम्भोद-कान्ती
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१७॥

किमपि परम-शोभा-माधुरीरूप-चेष्टा-
हसित-ललित-दृष्ट्यात्यद्भुतोत्कर्षकाष्ठाम् ।
परम-रस-रहस्यावेशतः सन्दधानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१८॥

निखिल-निगम-गूढौ नित्यमन्योन्य-गाढ-
प्रणय-भर-विवृद्धौ तुङ्गितानङ्ग-चेष्टौ ।
सुरत-रस-मदान्धौ न्यस्तजीवौ मिथोऽङ्के
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥१९॥

रमण-वदन-चन्द्रे दत्त-ताम्बूल-वीटी
निज-रसनिधि-वक्त्रे दत्त-तच्चर्व्य-भागौ ।
मिथ उरु-रसदाङ्ग-स्पर्श-लोलुभ्यमानौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२०॥

अति-रसमद-वेगान्निस्त्रपाधैर्य-दृष्टी
क्रम-समुदित-तत्तत्-सौरताश्चार्यनीती ।
बहिरतिरस-लीलानुव्रताक्षाम-वर्णौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२१॥

रजत-भवन-रन्ध्रायात-सन्मन्द-शीता-
निल-विदलित-तुङ्गानङ्ग-संग्रामखेदौ ।
क्षण-सहचर-रम्यारब्ध-भूयो-विहारौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२२॥

तदतिललित-लीला-लोल-लोलाङ्ग-लक्ष्यौ
सुललित-ललितादेर्निर्णिमेषाक्षिरन्ध्रैः ।
हृदयमुपनयन्तौ पूर्णसौख्याम्बुराशी
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२३॥

प्रणयमय-वयस्याः कुञ्ज-रन्ध्रार्पिताक्षीः
क्षितितलमनु लब्ध्वानन्दमूर्च्छां पतन्तीः ।
प्रतिरति विदधानौ चेष्टितैश्चित्रचित्रैः
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२४॥

बहुविध-परिमृष्टान्योन्य-गात्रावजस्रं
बहुविध-परिपृच्छा-कारितान्योन्य-वाचौ ।
अनिमिष-नयनालि-स्वादितान्योन्यवक्त्रौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२५॥

मनसिज-रस-सिन्धोरद्भुतावर्तवेग-
श्रमित-तनु-मनस्कौ केलि-विस्मापितालीं ।
बहुविध-रस-गात्रस्पर्श-जल्प-प्रहासौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२६॥

बहुल-सुरत-खेलायास-संखिन्न-गात्रौ
दयित-निज सखीभिर्वीज्यमानौ पटान्तैः ।
सरस-भुजग-वल्ली-पल्लवास्वादि वक्त्रौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२७॥

मिथ उरु-पुलक श्री-दोर्लता-बद्ध-कण्ठौ
व्यतिमिलित-मुखेन्दु किङ्किणी-लालितांघ्री ।
नव-रतिरस-खेला-श्रान्ति-तन्द्रालु-नेत्रौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२८॥

सुरत-रस-समुद्रे पादमाचूडमग्नौ
त्रुटि-लवमिव यातां मन्यमानौ त्रियामाम् ।
प्रतिनिमिषमसीमोज्जृम्भितानङ्ग-तृष्णौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥२९॥

तदति-मधुर-धाम्नि नाम्नि वात्सल्यमात्रात्
कथमपि कलनीयौ वश्यचिह्नाद्य-सीम्नः ।
श्रुतिततिभिरगम्यौ सत्-सभाजस्र-सङ्गौ
स्मर निभृत-निकुञ्जे राधिका-कृष्णचन्द्रौ ॥३०॥

परमरस-रहस्यानन्द-निःस्यन्दि-वृन्दा-
वन-विपिन-निकुञ्जे दिव्यदिव्यैर्विलासैः ।
निरवधि रसमानौ राधिका-कृष्णचन्द्रौ
भज सकलमुपेक्ष्य तावकाः शास्त्रयुक्तीः ॥३१॥

स्तवमिममतिरम्यं राधिका-कृष्णचन्द्र-
प्रमद-भर-विलासैरद्भुतं भावयुक्तः ।
पठति य इह रात्रौ नित्यमव्यग्र-चित्तो
विमल-मतिषु राधालीषु सख्यं लभेत ॥३२॥

इति श्रीमद्रूपगोस्वामिविरचितः श्रीनिकुञ्जरहस्यस्तवः संपूर्णः ।

# श्रीनिकुञ्जकेलिबिरुदावली ।

निकुंजकेलीबिरुदावलीयं
निकुंजकेलीरसिकप्रसादम् ।
स्वकीर्तिनैपुण्यजुषे प्रदत्तो
स्वकीर्तिनैपुण्यपुषे जनाय ॥ १ ॥

श्रीकृष्णलीला हृदयं पुनातु मे
लीला च या प्रेमरसानुभाविनी ।
रसश्च कान्तापरिशीलितोऽस्ति यः
कान्ता च या गोकुलयौवताग्रणीः ॥ २ ॥

व्रजयुवतिजनैकप्राणबन्धोरमुष्य
स्मरविलसितमेवोत्कर्षमाहुः कवीन्द्राः ।
भवकमलभवाद्यैः श्रावकैः प्रख्यमानं
न पुनरनुपमं तत् पारमैश्वर्यमुच्चैः ॥ ३ ॥

प्रथितमपि वदान्यं राधिके ! मां तवाल्यः
कथमधरसुधायास्तस्करं ता ब्रुवन्ति ।
पिब पिब मुखचन्द्रं तत् स्वयं मे निकामं
त्वमिति रहसि शंसन् शं स कृष्णस्तनोतु॥ ४ ॥

१। चण्डवृत्तस्य नखे मातंगखेलितम् ।

गोकुलानन्द शीलितामन्द—चातुरीपुंज माधवीकुंज
भाजिमातंग गामिनीसंग शालितारंग रागितानंग
कौतुकासंग भारभागंग रागितारंजि यौवतासंजि
धीरतागंजि चापलाव्यंजि कैतवाभ्रान्त शोणनेत्रान्त

शायकाक्रान्त भाविनीस्वान्तभीवितानन्त केलिसामन्त
रेचितोदन्त राधिकादन्त दंशनाखण्ड माधुरीषण्ड ।
खेलितापांग नीरदाभांग राधिताश्रान्त कन्दराध्वान्त ।
नीलचेलांचि कामिनीकांचि मोचनोदीर्ण सम्मदाकीर्ण
शेमुषीशीर्ण वामताभीर्ण खेद संपूर्ण वैदुषीतूर्ण
कामसंरंभ संगरारंभ जातरोमांच पाहि भो मां च ॥धीर॥५

उद्यन्नखांकहरिणांकरुचा सुचारु
खेलापरं कुचरथांगयुगं सुकण्ठ्याः ।
स्वागाधहृत्सरसि साधु निमज्जयंस्त-
दुन्मज्जयन् स रसिको मुदमादधातु ॥ ६ ॥

संगत सद नंगजमद-रंग तरल दंग गरल-
श्रृंग रुचिर भृंग सुचिर-गुंजनचण कुंजशरण ।
कंज निचय गंजनशाय ॥वीर॥ ७ ॥

२। वीरभद्रः ।

कन्दर्पदर्पककुचाद्रिविमर्दभीति-
संविग्नकौस्तुभभटश्रितकण्ठपार्श्वः ।
कान्तातिनिःश्वसितधूसरिताधरश्रीः
कृष्णो मुदं नयनयोर्मम संतनोतु ॥ ८ ॥

गुंजद् गुंजद् भ्रमरकलितकल भव्यस्तव्यस्थल सरसिज दल
माल्य स्वालय्र्पित रतिरस कर रंगत्रंगद्रसन युवति वर
दीव्यन्नीव्यन्तिक विनिहित पुरु वाम्य क्लाम्यद्धलकर बलदुरु
हर्षोत्कर्षोपुलक हृदय नट शंभ स्तंभ स्फुरित जघन तट
कांचि प्रांचि स्वनित जनित सुख मन्द स्पन्द स्वलक ललित मुख ।
नृत्य श्रित्यर्थक शुभमगिसर सद्यः प्रद्यत् प्रखर नखर शर

भिन्न स्वित्र स्तन युग नव घट सक्त स्रक्तर्जक सुपदक भट ।
रत्युद्धत्युच्चलित चिकुरचय-शस्तस्र त प्रवर कुसुममय
तल्प स्वल्प स्वनन वलयधर कंपोत्कंपोत्तरल सुतनु कर
वेष्ट स्वेष्ट स्मर विलसित मद मत्त प्रत्त स्वजन हृदय मुद ।
भीष्ट श्रीष्ट स्त्रपघन रदबल दष्टस्पष्ट प्रभसदधर दल
कान्त स्वान्तप्रणयद ममलस हृद्यक्लिद्यप्यतुलकरुणरस॥वीर ॥९॥

कौस्तुभविदलितसुललितकुंकुमकंचुककुचां राधाम् ।
तदलकमार्जिततिलको रमयन् कृष्णो हृदि स्फुरतु ॥१०॥

संजात तन्द्रास्य कंजात चन्द्रास्य
काश्मीर जन्मादि रश्मीर सम्मादि
घर्मोचितानल्प नर्मोचिताकल्प ।
कुंजे लसानन्द-पुंजे रसानन्द ॥ वीर ॥ ११ ॥

३। पुरुषोत्तमः ।

प्रियाया गच्छन्त्याः स्वयमनुपलब्धो वनपथं
परिष्कुर्वन् पुष्पैर्घनविटपवल्लीर्विघटयन् ।
स्वपाणिभ्यां लुंपन् निजचरणचिह्नं चलति य-
स्तदग्रे तं नौमि प्रणयविवशं त्वां गिरिधरम् ॥१२॥

धरणी कलभ हारि क्रिय रमणी व्रज केलि प्रिय ।
ललितोद्भट वेणु स्वर वलितोत्कट काम ज्वर
दलितान्वित लोक त्रपवनिता स्मृत भो भद्रप ।
कमलार्चित पादद्युति पटलार्दित शोक श्रुति
युगलोज्वल नीप स्फुटन्मुकुलोज्ज्वलरूपच्छट ।
चपला प्रभ चेल द्वय महिलार्पित हेल स्मय-
सरसेक्षण कोण क्रमरभसेक्षक लोक भ्रम-
जनकाश्रित वेदक्रम शमदाच्युत शील श्रम

कणिकार्जित माधुर्य सदनिकाङ्कुन रोचिर्लस
पुरुषोत्तम चेतःस्थित मरुपो व्रणमाशु स्मृत-
चरितो ध्रुवमेव द्रुत मभितोऽर्दसि नाथ द्रुत-
मनसां प्रणयेन त्वयि मम सांप्रतमीश त्वयि
भवताद्रति रीतिर्मति भवतात्तव नामश्रुति
रमितार्थक लील स्वर ममितार्थद मामुद्धर ॥ वीर ॥१३॥

उरोजान्तर्लग्नां मम दृशमियं वीक्ष्य चकितं
परिस्रस्तं चेलांचलमधिशिरो न्यस्य सुमुखी ।
पिधत्ते कंचुक्यावृतमपि कुचं तद्गतमनो-
मणिं मे संप्राप्येत्युदितसुबलो नोऽवतु हरिः ॥१४॥

विमल जलद सुभग सुषम विजित चपल वसन कुसुम-
सदृश मृदुल गजकभुजक चिकुर रचित शिखिजदलक ।
रसिक युवति हृदय कलन चटुल नयन मदिर मिलन
रुचिर वदन मधुर हसित कथित निखिल सुरतचरित ।
ललित चरण कमल चलन विलस सुतनुवितनुवलन ॥धीर॥१५

४। अच्युतः ।

कर्णाध्वगाम्यतनुनर्मशलाकयैव
विद्राव्य चारुरदनच्छदगाढमुद्राम् ।
निष्कासितां स्मितसुधां प्रसभं रमण्याः
कृष्णः स्वनेत्रचषकेण पिबन् मुदे स्यात् ॥१६॥

जय जय शीलप्रिय जलधीलस्वर घन नील द्युतिधर कील
स्तुत पुरुलील प्रणय निमीलत् त्रपतरु लील श्रुतिपरिशील
नव मुरलीक प्रबलदलीक प्लुत जनभीक प्रकट तटीक
प्रमदवतीक स्थित सुपटीकर्षक रजनीप स्वकिरणदीप ।

प्रणुत समीप स्फुट दलनीप स्तृन तटदेश प्रथित वरेश।
प्रगतसुकेश प्रवरनिशेश प्रतिम विशेष प्रभृत विशेष
प्रभ शुभवेश ब्रजमहिलेष चलित सुचेल स्तनयुग खेल
न्नयन सुवेल स्मृत रतिवेल सुहृद्रतिवेल प्रतत निशात
स्मर शर जात प्रजव निपात प्रबल विघात प्रचलित देह।
श्रित रत गेह त्वमघहरेह स्फुर हृदि मे ह ॥वीर॥१७॥

मयि क्षिप्त्वापांगं कुचकनकशंभुं स्मितसुधा-
सुधाराभिः कान्ते ! स्नपयसि न किं पूजयसि तम्।
प्रकामं कामायाच्युतकरसरोजेण सुदती-
त्युपागच्छन् जल्पन् विलसतु स राधारतिसखः ॥१८॥

वृन्दावननगवृन्दाधिकलव-कुंजालयचर गुंजामणिसर।
कंजातुलमदगंजामलपद कान्ताकुचशय मां तारय जय ॥धीर॥१९॥

५। तुरङ्गः।

पृष्ठीकृत्य प्रयान्त्या द्रुतमयमधुनैवाग्रतो रोत्स्यते मां
इत्याश्वासं दधत्या हृदि बत सुतनो रक्षिणी ते पदाब्जे।
प्राभूतां नैव गन्तुं कथमपि पुरतो नापि पृष्ठं द्रुते। वे
त्याकुंचन्त्या नितंबत्विपि धृतनयनो माधवो मां धिनोतु॥२०॥

सुन्दर मुख शशि बिंबक कुन्दनिबिड मदडिंबक-
दन्त पटल लसदंबुज शन्तमकर शुभकंबुज
लंगिमभर परिकुण्ठक रंगि मधुरतरकण्ठक।
संगत युवति कदंबकरंग तरलित हृदंबर
लुंचनचतुर दृगंगन कुंचन विलसित रंगण
वंजुल कुसुम सुरंजित मंजुल कचभर गंजित
चंचल मधुकर मण्डल संचलदलक सकुण्डल।
मन्द हसित लसदिन्दिर शन्द चरित गुणमन्दिर।

दण्डित समदमतंगज मण्डितगति वलदंगज
कंप रुचिर रुचि निन्दित शंप सुतनु मति सन्दित।
दंभ विषम जन वंचक शंभ दमन शरपंचक
खण्डित हृद तनु संगर पण्डित रति सुहृदंगर।
बंभ्रमदलिवरलंभित संभ्रम सुहृगभिरंभित।
संगम सदलिक कंकण मंगल चलकर कंकण-
डिण्डिम रणित निरन्तर चण्डिम कलित मुदन्तर।
नन्दहृदयमकरन्दर शन्दय विपिनपुरन्दर ॥वीर॥२१॥

नटच्चटुललोचनांचलविलासवल्गुश्रियं
स्वचिल्लिवरवल्गनग्लपितधैर्यचर्याभराम्।
नवप्रणयसंभृतस्मितसुधापिधानाकुलां
निजप्रणयिनीं स्मरन् सपुलको हरिः पातु नः ॥२२॥

जय चारुवेश नयनागरेश शयनीततालमयरागजाल-
धरवेणुदूतवरसाधुधून वनिताभिमान जनितातिमान ॥वीर॥२३

६। तिलकम्।

जीयाद्धरिः स्वमुरलीपरिगीतगीत-
पातत्रपांशुसरसीः सरसीरुहाक्षीः।
शून्यान्तरा गतबला अपि ताः प्रकुर्वन्
पूर्णा निजाधरसुधारसुधारसेन ॥२४॥

चटुल मधुपमद कुण्ठक सदलक।
विमल जलद रुचि लुण्ठक दमनक-
मृदुल सुरभि दल गुंफक सुललित
कुलवर तनुधृति लुंपक विहसित।
हठभर कुचपट लुंचन विकलित-
युवति नयन कटुकुंचन कवलित।

करकरधुनन विशंकट कलहज
वितत पुलककुल कंकट मलयज
मृगमदघुसृण सुगन्धित परिसर
वनगत मदनमुग्धित मधुकर-
निकर रणित रति मंगलमयरव-
विवृत सुरत रस रंगज सुख नव
वितनु समर पुरुदंभपटिमधर-
सुतनु निबिड परिरंभ रसिकवर ।
जनित मणित मणिकंकण कणदति
रभस रमण गतशंक चिकुरतति
मिलित नटन झष कुण्डल विस्रमर-
रुचिभर वरकरिशुण्ड सदृश कर ।
निज परिचरण रतं जनमिममति
कृपय निखिल गुणरंजन रतिपति
शतमतिमथनकृदंग सुषम जय
मनसिज वलित तरंग चरितमय ॥वीर॥२५॥

रतिरणघनघर्माक्रान्तसिन्दूरपंक-
श्रितवदलकमालासक्तभालं प्रभालम् ।
युवतिरदनकीर्तिख्यापिबिंबाधरं द्रुत्
मम कलयतु कृष्णस्यास्यचन्द्रं स्वतंत्रम् ॥२६॥

त्वं गत शंकित रंग तरंगित कुन्द सुसत्तम दन्त वसन्तम-
वंजुल कुंजक मंजुल गुंजक संजय रंजक कुंकुम पंकक ॥वीर॥२७॥

नित्यं याति यथायथा कुचयुगं पीनत्वमुत्तुंगतां
चोलिं प्राप्य तनुत्वमृच्छति तथास्याधावृतौ योग्यताम् ।
कान्ते कुप्यसि तत् प्रसाधनकृते सख्यौ वृथा द्वटता-
मक्ष्णोर्मे कलयेति कृष्णभणितं जागर्तु मे चेतसि ॥२८॥

७। चण्डवृत्तस्य विशिखे पद्मम् ।

जय लव मात्र स्वविरहदात्र प्रदित सुगात्र व्रजमहिलात्र ।
ग्रहपति कन्या तटलसदन्याप्रतिम सुधन्या यतनत वन्या–
सुहृद लका तालिपटल कान्तालिकनिजकान्तामिलन रतान्ता ।
रतिरणरंगो दय कुचसंगोपन परिभंगो दितवद नंगो
रुशर नखांका कलित शशांका वलिवलितांका धृत हरिणांका
नन सुहृगुल्लासक परिफुल्ला चटुल मरुल्लालितभुज मल्ला-
हित परिवेष्ट प्रणय सुखेष्ट प्रबलदकष्ट स्वरदनदष्ट
प्रमदवती द्रागुदित सुधार्द्रा चरितमिहार्द्रा वहमति मुद्द्रा-
वित हृदि युंजेऽरुणतरगुंजे लित नवकुंजे रुवदलिपुंजे
।।वीर।।२९।।

८। वंजुलम् ।

श्रीराधेक्षणसख्यलक्षणरसस्वाराज्यमत्युर्जितं
प्राप्य स्वैरमलं गतो यदधरो भ्राजिष्णुतां जिष्णुताम् ।
नाथ न्यक्कुरुतामयं तव ततः सख्यालिहृङ्मोदनो–
मत्तालिश्रितबन्धुजीवकयशःपुंजः निकुंजेश्वर ।।३०।।

कुंचितकचविरचनधृतचंपक लुंचितमणिसरसदतनुकंपक–
रंजितयुवतिसुरतरसलंपट गंजिततडिदभिनवरुचिसंपट ।।वीर।।३१

स्नातोत्थितां कलितरंजितचीनचीर–
पाणिद्वयोद्धृतकचां चकितामकुर्वन् ।
कान्तां हरिर्जयति वल्लिदलावृतोऽस्या
वक्षोजकक्षसुखवीक्षणसक्षणात्मा ।। ३२ ।।

विलस विशंकट भुज गतसंकट ।
जगदति रंगल चरित सुमंगल ।

शशधरगंजक मुख रुचि रंजक
कुरुबकमंजुल विकसित वंजुल
कुसुम सुमण्डित शुचिरस पण्डित ।
तनुरुचि दण्डित जलधर खण्डित
तडिदति सुन्दर वसन पुरन्दर
धनुरतिनिन्दक चलशिखिचन्द्रक
निचय करंबित कचभर लंबित
मणिसर कंपक धृत नव चंपक ।
कलित विकस्वर कल गवल स्वर
सुतनु जनस्खल दुपजघनस्थल
परिहित नीव्यभि हित मदन व्यभि-
चरित जव स्फुर दतिखर निष्ठुर
गुरुजन गर्जन कटु मुख तर्जन
कृतगति वर्जन वलदुपसर्जन
पिशुन विसृत्वर पुरु वलित ज्वर
शमन कृतक्रम धृतयुवति भ्रम ।
कलपद संचित चतुरिम वंचित
कटुतर दुर्जन भवन समर्जन ।
कलित सुतल्पक विलसदनल्पक ।
मधुरिम सन्धित मदन मुदन्धित
वरतनु कंकित कुचयुगटंकित ।
भुज परिरंभण रुत मणिकंकण
चपलिम लंभन जनित विकंपन ॥वीर॥२३॥

विकचयदपि राधानेत्रनीलोत्पलान्तं
स्मितसितरुचिबिंबं संभ्रमादुज्जिहानम् ।

व्यनमयदथ सा प्राचुकुचत्तत्तदैवे
त्युदितमनु स जीयात् कुन्दवल्लया मुकुन्दः ॥३४॥

जय कमलागोचरपरभागो-चितनवरागोपनतकलागो-
पनचलरामामुखविधुधामा-मृतकलनामादित नवदामा ॥वीर॥३५॥

नृत्यान्ते धृतगर्वमुद्धतसखिप्रोक्तोजनात् स्वं हठा-
ज्जेतुं द्रागभिनेष्यमाणनटनावेशात्तशोभां प्रियाम् ।
कांचीकंचुकगाढबन्धकषणासंसक्तपाणिद्वयां
पश्यन् स्वाक्षियुगं हरिः सफलयन् दिश्यात् स मे वांछितम् ॥

६। बकुलभासुरम् ।

जय जय पिंछमुकुट रससागर सागरसाभूषणपदकेतन ।
केतनकल्पनिकुंजमहारत हारतरलतरताप्रतिपादक ।
पादकमलवरलास्यविलासक लासकलाकौतुकमुदितान्तर ।
तान्तरमिततरुणीमुखमार्जन-मार्जनपरकरकमल सुखातुल ।
खातुलवनितावृन्दविमोहन मोहनदीप्लावितभवनारद ।
नारदशाप्रार्थककमलासन-लासनचरणाब्जपरागक ।
रागकलास्वरमूर्छनसंचय संचयनाश्रितसर्वविलक्षण ।
लक्षणमयमुरलीपरिशीलक शीलकलितगुणमणिपदपर्वत ।
पर्वतरलरमणीक्षणनिर्वृत निर्वृतनर्मविलासहसप्रिय ।
सप्रियभृंगीस्तुतनवमालक मालकदंबकमंजुलरूपक ।
रूपकरम्यकवित्वकवीलित वीलितशिखरितटाप्तमहारस ।
हारसहित कुचकंचुकघट्टक घट्टकलहखण्डितसुसतीव्रत ।
तीव्रतमःशमकांग सदामददामदरान्दोलनगतिविभ्रम-
विभ्रमदन्तरुदितबहुसंभ्रम-संभ्रमविश्लथनीविवधूजन-
धूजनकेक्षणभोगविनोदन-नोदनचित्रचरित्रविराजन ।

राजनटोपम कौतुमकंधरकंधरसुन्दर गोकुलजीवन ।
जीवनमोक्ष समस्तसभाजन-भाजन कुंजगृहश्रितदेवन ।
देव नमो भवते भयभेदन ॥ वीर ॥३७॥

मधुरहसितविद्याद्राविताशेषनारी-
धृतिकठिनभुजंगीसंचयः शं चिकीर्षुः ।
शिशिरतरदृगंभोजाचलेनामृजंस्ताः
स रसयतु मुकुन्दः कुन्ददामाभिरामः ॥३८॥

कलितमुखतानललितसुखगान-
जनितमतिमोहवनित रतिदोह ।
चलदमलमाल जलदसमभाल ।
नयचतुरशील जय मधुरलील ॥वीर॥३९॥

मुखरचरणमेकं कंपयन् लंपटत्वं
दधदधितरु गात्रं धारयंश्चारयन् स्वम् ।
निजतनुमनु नेत्रं वल्लिगूढांबुजाक्षी-
हसितदृशि च युंजन् कुंजनाथः स जीयात् ॥४०॥

१०। बकुलतुङ्गम् ।

उल्लस मुकुन्द कुन्दवनमाल मालमदहारिहारिरुचिकाय ।
कायनविहार हारलतिकान्त-कान्तमणिराजराजदुपकण्ठ-
कण्ठ कमलास्य लास्यकृनभूप भूषणह गानगानवधिमोद ।
मोदयमदक्ष दक्षमतिनार्य-नार्यपथसत्वसत्वरहृदिष्ट-
दिष्टमहिलागलागपरभाग-भाग मलधील धीललित लोक-
लोकनन्द भाजभालविधुबिंब बिंबसुभगोष्ठ गोष्ठपसमुद्र-
मुद्रवरचन्द्र चन्द्ररसचित्र-चित्रक कपोलपोलवनहास-
हासमहचारिचारिमसदन्त-दन्तरुग कन्द कन्दरसुपर्व
पर्वतविलास लासकमहेश हे शरण देव नाथ ॥४१॥

उन्नीतवामकरपद्मधृताग्रशाखां
राधां विलोक्य कुसुमप्रचयैकतानाम् ।
पश्चाद् विवर्तितमुखीं सहसा विधित्सु-
र्वंशीं स्वरन् जयति गूढतनुर्मुकुन्दः ॥४२॥

नीरद पुंज-श्रीधर गुंज-भासुर भृंग-क्ष्माधर शृंग-
स्था तुलसन्त स्त्वामभजन्त ॥नाथ॥४३॥

पाणिर्मेऽत्र मदीयकिंकिणिसखः चोकूयते तेन किं
सद्यः सुन्दरि ! किंकिणीमनु निजां शाशंकमानेक्षसे ।
जेघ्रिये कमलं विकास्य तव किं चोकुप्यते वा मुखं
साक्षादित्यतिमंजुला तव हरे वाणी व्रजे भ्राजताम् ॥४४॥

११। अथ चण्डवृत्तस्य सामान्यभेदः ।

वेणुध्वानक धेनुम्वानक सार प्रीतिद सार श्रीमद
पूरद्रावण दूर प्रापण धामश्यामल भाम ध्यानल-
गोपस्त्री कृत-कोप श्रीडित-हास प्रोदित रास त्रोटित-
मान श्लेषण दानस्वेषण दाम भ्राजित कामप्रामृत
खेल क्लेशाद हेल श्लेषद वाल क्षेमद माल प्रेमद ।
भालस्थालक जाल क्षालक हारि स्वेदक वारि क्षेपक
वात प्राहित शात द्रागित भात क्ष्माधर रात स्वादर ।
लोक ख्यापित तोकत्वावृत मेघत्वायित हेऽघत्रा वित-
गोप व्रातक भो पत्रानक-वादित्रारत कादित्रा नत-
लोकस्थातुल शोकव्याकुल चारु व्यापृत कारुण्यामृत-
धार प्रीणय सारश्रीमय ॥वीर॥४५॥

मणिसरमहधारे कौस्तुभानर्घ्यदीपे
निजहृदि वनमालातोरणे धाम्नि नित्यम् ।

परिचर कमलांकस्वर्णसिंहासनस्था-
मघहर वरदेवीं राधिकां त्वं सकामः ॥४६॥

जय कुण्डल रुचिमण्डल शुभ गण्डक जगदण्डक-
दव खण्डन वर मण्डन रति पण्डित तनुदण्डित
घन मण्डल नवदण्डल ॥ देव ॥ ४७ ॥

वदनं मधुरिमसदनं चलनं दलनं करीन्द्रकीर्तीनाम् ।
हसितं सुदृगभिलषितं हरतु हरे मामकं हृदयम् ॥४८॥

१२। मंजर्यां कोरकः ।

नीलसरोजकुलस्तुतनायक शीलसमृद्धिजिताखिल नायक ।
पीतनपीतनवांबर नारद-गीतनवोदितलील सदा मद-
मारसहस्रजयिप्रभ नागर सारसलोचन हे गुणसागर ।
चन्दनचित्रकचित्रललाटक मन्दनटन्नयनांचल हाटक-
कुण्डलताण्डवितच्छविपुंजक तुण्डलसद्द्विजराज सुगंजक-
हारविराजिततुंगसदंसक सारविलासभरावधिशंसक-
सर्वविलक्षणलक्षणमण्डित पर्वविशेषसमर्पणपण्डित ।
विश्वसभाजितमंजुलतारत निश्वसनोल्लसदानमदानत-
तुन्द रमांकविराजदुरःस्थल सुन्दरकौस्तुभरत्नधर स्थल-
नीरजदामदरोर्जितधूनन-धीर जगद्वनितामतिमोहन ।
मत्तमतंगजनव्यगतिक्रम सत्तमनूपुरपूरितविभ्रम ।
नृत्यकलातिविचक्षण मादन-कृत्यकलापपराखिलसाधन-
धर्मपराङ्मुख गोपवधूधृत-भर्मपदांगदरावकशीकृत ।
चारुतराब्जपरागभराहत-मारुतवेल्लितवल्लिदलावृत-
चन्द्रकशोभित चूल सुधामय मंद्रकलस्वनवंश विभो जय ॥वीर॥

राधाकटाक्षमधुपावलिपीतबन्धु-
जीवाधरद्विगुणितस्मितसीधुपूरः ।

लीलांबुजं करतलेन विकाश्य जिघ्रन्
कृष्णः स मे हृदयगेहमलंकरोतु ॥५०॥

पादपल्लवभासरिल्लव–नीतखर्वतरूपपर्वत–
मार सुस्तुतकेलिवस्तुत नाथ सर्वकशेषपर्वक
चारुविक्रमशीलसुक्रम ॥ वीर ॥ ५१ ॥

वलद्घूर्णापूर्णारुणनयनमाकीर्णचिकुरं
नवालक्तारक्तालिकमधरसक्तांजनरसम् ।
प्रगे राधाबाधाप्रकुपितसखीतर्जितमलं
हरिं युंजे कुंजे हृदि कमपि भावं दधति तम् ॥५२॥

१३। मंजर्यां गुच्छः ।

जय कुसुमशायकोद्धतयुवतिरंजित ।
प्रबलतरघूर्णितारुणनयन गंजित–
भ्रमरधृतबन्धुजीवरुचिरुचिराधर ।
प्रसरदुरुजृंभितद्युतिचतुर नागर ।
श्रमसलिलराजियावकसरसभालक ।
क्रमविवृतविश्लथालुलितललितालक ।
प्रखरनखरांकितारुणहृदय खण्डित–
प्रणयभरवल्लभाकटुरटनदण्डित ।
क्रकचनिभचिल्लितर्जनबहुलताधुत ।
प्रकटशपथावलिध्वनितनिजसाधुत ।
स्मरसमरसूचकलपितवनदामक ।
ग्रथितबहुचातुरीप्रतिवचनसामक ।
द्रुतमसरलालिनिर्मितपटिमवंचन ।
प्रतनु मम भावमच्युत मनसि कंचन ॥वीर॥५३॥

स्मरसमरविमर्दामोदमुग्धं तवाङ्गं
मम कनयननासानन्दमुच्चैर्व्यतानीत् ।
वितर वितर चाटु प्रेमगर्भं प्रियोऽसि
श्रुतिसुखमिति राधागीर्धुतं स्तौमि कृष्णम् ॥५४॥

दृष्ट स्मर मद सृष्ट श्रम पद मृष्ट प्रणिगद धृष्ट प्रणयद
सिद्ध प्रतिभय विद्ध स्व हृदय वृद्ध क्लम विय दृद्ध प्रभ जय
॥ वीर ॥ ५५ ॥

इन्दीवरेण सखि ! कर्णमलंकुरुष्वे
त्युक्ता निरंजनमुदीक्षयते स्वनेत्रम् ।
तत्त्वं शृणोति न च पश्यति राधिकेति
वृन्दोक्तितो विधुरितो विधुरस्तु भूत्यै ॥५६॥

१४। मंजर्या गन्धः ।

धृष्टवर मानदव हेति भर दून नव-
नीररुह चारुमुख राध धृत खेद सुख-
मंजुपद चाटु चय भागुदित शीलमय
लील निजताप गण सूचि समुपक्रमण ।
साधु चरितालिकृत शान्त सुदृगंघ्रि धृत-
चूड वनितास्रजल सिक्तकुचकुंभतल-
मार्जिशुभ पाणितल लब्धमकरांकबल ।
मंक्षु हृत मानधन रोमक समुद्गमन-
बोधित विलासरस लब्धरतिकुंज लस
न्मंजुकुसुमालिदल चित्रमृदुतल्पतल-
रूप पुरुकेलिविश दंग सुहृदालि दृश-
मंग सुखयानुपद मिद्धरुचि चन्द्र मद-
हारि चरणाब्ज नख दीव्य ललितालि सख ॥देव॥५७

झनञ्झनदिति श्रुतिप्लुतिमिता रते किंकिणी
सनत् सनदिति स्वनाश्वसितिसन्ततिर्वा मुहुः ।
भ्रमद्भ्रमरसंभ्रमा प्रचलसौरभालिर्विभो !
झलञ्झलति भातु मे हृदयसंपुटे रत्नवत् ॥५८॥

मदनरणगसुतनुदशन-विदित विदितचरितललन ।
मुखरवलयकथितवितत-सकलसकलनिभृतसुरत
कलितविपिनसदनशयन विलस विलस कमलनयन॥धीर॥५९

खपुरसरसवीटीं चर्वयन्नास्यभासा
वरतनुधृतिगर्वं खर्वयन् पीतवासाः ।
सुबलभुजशिरोऽबद्धामबाहुः सहेलं
मदकलकरिगामी भाति चित्तेऽनुवेलम् ॥६०॥

१५। विदग्ध त्रिभंगी ।

वृन्दारकनतिवृन्दाहृतशुभ-वृन्दाविपिनपुरन्दर कन्दर-
खेलारत वरहेलावृतसुम-हेलामुखविधुबिंबकचुम्बक ।
गोपीगुरुभयलोपीहितसुख-रोपीक्षणरतिनायकशायक ।
गंगाधरधृतिभंगाचितनव-रंगावनमुरलीलितशीलित ।
शर्मालयगुणकर्माकृतिधर नर्मामृतरसवर्षणहर्षण ।
कृष्णातटनट कृष्णासमशर-तृष्णाविधुतसतीव्रततीव्रत ।
रंभाजयिसुभगम्भावुकगुण-संभावितमहिलालसलालस
राधास्मरशरबाधाहर सुर-साधायकवचना मलदामल ।
कान्तामणिनयनान्तादरलव-शान्ताखिलदवलक्षण सक्षण ।
रामाकुचमुकुलामादिततम कामार्बुदमददारणवारण ।
बालार्पितनवमालासुललित कालागुरुरसवासित भासित ।
शीलोदितनिजलीलोन्नत नव-नीलोत्पलरुचिजाल सदा लस
देवाभिलषितसेवामविरत-मेवादिश करुणालय पालय ॥वीर॥६१

चंचद् बर्हविराजितिर्यगरुणोष्णीषावनत्युन्नति
भ्राम्यत् कंधरमुच्छलत्स्वरदनद्योतानुविद्धस्मितम् ।
सख्यांसाहितवामबाहुवलयद्राधावितर्कावलि-
कर्णाकर्णिवचः प्रभोर्विजयतां गोष्ठाधिरथ्यान्तरम् ॥६२॥

मन्दमरुच्चलपीतचेल शंदसखीव्रजगीतखेल ।
युंजदलिव्रजशोभिमाल कुंजगृहश्रितकेलिजाल ॥वीर॥६३॥

नटन्मणिसरं त्रुटद्वलयमुच्छलत्सौरभं
क्वणत्कनकनूपुरं व्रणितमुक्तधाराधरम् ।
स्खलत्कचभरं दरश्रमकपालि सप्रेयसी
भवान्मदनरम्यतां दधदधीश रंरम्यताम् ॥६४॥

१६। अथ सासविभक्तिकी कलिका ।

मुखविधुरिष्टः सुहृगभिमृष्टः स्मरमदधृष्टः स भवतु हृष्टः ।
सुवलित हस्तौ करिकरशस्तौ रतिकलितस्तौ युवतिभिरस्तौ ।
श्रितबहुदासा जगदभिलाषा मधुरिमवासाः स्युरिह विलासाः ।
गुणमभिधेयं तमपरिमेयं जगति सुगेयं रटति वरेयम् ।
× × × व्रजभय दरणौ लसदाभरणौ लवणिमधरणौ
प्रणुवे चरणौ तास्तरसारां श्चतुरिमभारान्मम हृदुदारान्
भजतु विहारान् दयित सवयसा सहवरमहसा लस सहसरसा-
मृतमयवचसा प्रविहर ताभ्यां सुतनुधृताभ्यां स्मरवशगाभ्यां
भुजभुजगाभ्यां तैर्जय दक्षै-र्युवतिधृतिक्षैः परिषदलक्षैः
प्रचलकटाक्षैः सुहृगभिलषते वनमधिवसते तस्मै महते
स्पृहयति भवते तदतिमदाभ्यां वितरति ताभ्यां स्वमपि नटाभ्यां
तव नयनाभ्यां सुहृगुदितेभ्यः स्मरवलसितेभ्य स्तदिह त्वमेभ्यः
प्रमिल सितेभ्यः रतिसुखभरितात्तदतुलचरिता न्न फलमुदारात्
परमिह सारात् त्रस्यति ताभ्यां रतिमुग्धाभ्यां खरनखराभ्यां

तवकककराभ्यां प्रखरतरेभ्यो मदनशरेभ्यो ऽवसि बत तेभ्यो
सुतनुमितेभ्यः प्रथिततमस्य प्रतिपदमस्य स्वमिव वरस्य
त्वमसि रसस्य स्मररणचलयो र्नटरसकलयो र्झषकुण्डलयो
र्युगमेव कलय व्रजभुवि वसतां रतिमभिलसतां शरणमसि सताम् ।
तस्मिन् भगवति लीलां कुर्वति परमकृपावति मतिरस्तु भवति ।
तव मृदुतरयो ररुणाधरयोः खपुरसुरसयोः सुद्दगतिरसयो
रुल्लसितेषु प्रमदय तेषु स्मितकुसुमेषु प्रेमपदेषु स्वान्तम् ।
× × × पुरुदय ! नवनवरसमयचरित !
निखिलनयमन्दिर जय जय ॥ वीर ॥ ६५ ॥

स्वीयं कौशलसूचकेन कुटिलालोकेन कीर्णोऽप्यलं
कुर्वन्नेव कपोलयोर्मकरिके गान्धर्विकायाश्चिरम् ।
प्रस्विन्नांगुलिरादिश प्रभुवर त्वं मां कृपावारिधे !
येन त्वामभिवीजयानि वलितानन्दाश्रु सप्रेयसीम् ॥६६॥

जय शुभलीला मृतरस लीला-मय भवदाली परिजन पाली-
मनुगणनाया महमपि याया मिति भवपाशा वृतमतिराशा
मपि रचयेयं फलतु ममेयम् ॥ नाथ ॥ वीर ॥६७॥

मधुररसकृतार्थीकारिहारीश्रलीलः
प्रणयिसुजनचेतोवप्रविप्लाविशीलः ।
क्षणरुचिरुचिकान्ताकान्तिसंमर्दधीलः
सुखयतु मुदिरोऽस्मान् मेदुरः कोऽपि नीलः ॥६८॥

राधामाधवसाधुसाधनसुधाधाराधुराधारिणां
धाता सातमियं नुतिः प्रतिपदं प्रीतिप्रताना सताम् ।
अत्राधि विधुवन् धराधरधरो धाराधरेन्द्रद्युतिः
सद्यः स दधातु यद्यवद्यमधिपद्याद्यन्तमध्यान्तगम् ॥६९॥

श्रीमद्रूपपदाब्जधूलिमलिके नित्यं दधे या मनाग्
घ्राता हृन्मधुपं ममानयदहो कृष्णांघ्रितृष्णांघ्रिपम् ।
यः संसारमतंगजांगमदिरां व्यस्मारयत् स्वै रसै
र्यद्गन्धाणुलवोऽपि कर्षति धृतोत्तर्षं मुनीन्द्रानपि ॥७०॥

षोडषभिः कलिकाभिः पूर्णामृतरश्मिमण्डलीवेयम् ।
बिरुदावल्यधिकुंजं सराधमाधवमुदे भूयात् ॥७१॥

वियन्नभःकारकचन्द्रसंख्ये शाके शुचौ सूर्यदिने सुदर्शे ।
निकुंजकेलीबिरुदावलीयं राधासरस्तीरभुवि व्यराजीत् ॥७२॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचिता
श्रीनिकुंजकेलिबिरुदावली संपूर्णा ।

# विज्ञप्तिः ।

संप्रार्थनात्मिका ।

युवतीनां यथा यूनि युनां च युवतौ यथा ।
मनोऽभिरमते तद्वन्मनोऽभिरमतां त्वयि ॥ १ ॥

दैन्यबोधिका ।

मत्तुल्यो पातकी नास्ति नापराधी च कश्चन ।
परिहारेऽपि लज्जा मे किं ब्रुवे पुरुषोत्तम ॥ २ ॥

मत्समो नास्ति पापात्मा त्वत्समो नास्ति पापहा ।
इति विज्ञाय गोविन्द ! यथायोग्यं तथा कुरु ॥ ३ ॥

मत्समो घोरपापात्मा नास्ति कृष्ण धरातले ।
त्वत्समो करुणासिन्धुर्नास्ति त्वं हि गतिर्मम ॥ ४ ॥

लालसामयी ।

कदाहं यमुनातीरे नामानि तव कीर्तयन् ।
उद्बाष्पः पुण्डरीकाक्ष ! रचयिष्यामि ताण्डवम् ॥ ५ ॥

तवैवास्मि तवैवास्मि न जीवामि त्वया विना ।
इति विज्ञाय राधे ! त्वं नय मां चरणान्तिके ॥ ६ ॥

कदा गंभीरया वाचा श्रिया युक्तो जगत्पते ।
चामरव्यग्रहस्तं मामेवं कुर्विति वक्ष्यसि ॥ ७ ॥

विरचय मयि दण्डं दीनबन्धो दयां वा
गतिरिह न भवत्तः काचिदन्या ममास्ति ।
निपततु शतकोटिर्निर्भरं वा नवाम्भ-
स्तदपि किल पयोदः स्तूयते चातकेन ॥ ८ ॥

प्राचीनानां भजनमतुलं दुष्करं शृण्वतो मे
नैराश्येन ज्वलति हृदयं भक्तिलेशालसस्य ।
विश्वद्रीचीमघहर तवाकर्ण्य कारुण्यवीची-
माशाबिन्दूक्षितमिदमुपैत्यन्तरे हन्त शैत्यम् ॥ ९ ॥

मयि प्रसादं मधुरैः कटाक्षै-
र्वंशीनिनादानुचरैर्विधेहि ।
त्वयि प्रसन्ने किमिहापरैर्न-
स्त्वय्यप्रसन्ने किमिहापरैर्नः ॥ १० ॥

गोविन्दवल्लभे राधे प्रार्थये त्वामहं सदा ।
त्वदीयमिति जानातु गोविन्दो मां त्वया सह ॥११॥

राधे वृन्दावनाधीशे करुणामृतवाहिनि ।
कृपया निजपादाब्जदास्यं मह्यं प्रदीयताम् ॥१२॥

# श्रीनाममाहात्म्यम् ।

ॐ आस्य जानन्तो नाम चिद्विविक्तन
महस्ते विष्णो सुमतिं भजामहे ॥ १ ॥

ॐ तत्सत् । ॐ पदं देवस्य नमसा
व्यन्तः श्रवस्यवश्रव आपन्नमृक्तम् ।
नामानि चिद्दधिरे यज्ञियानि
भद्रायान्ते रणयन्तः संदृष्टौ ॥ २ ॥

ॐ तमु स्तोतारः पूर्वं यथाविद
ऋतस्य गर्भं जनुषा पिपर्तन ।
आस्य जानन्तो नाम चिद्विविक्तन
महस्ते विष्णो सुमतिं भजामहे ॥ ३ ॥
[श्रुतयः । हरिभक्तिविलासे २.११.५१०–१२]

एतन्निर्विद्यमानानामिच्छतामकुतोभयम् ।
योगिनां नृप निर्णीतं हरेर्नामानुकीर्तनम् ॥ ४ ॥
[श्रीमद्भागवते २.१. ११]

न निष्कृतैरुदितैर्ब्रह्मवादिभि-
स्तथा विशुद्ध्यत्यघवान् व्रतादिभिः ।
यथा हरेर्नामपदैरुदाहृतै-
स्तदुत्तमश्लोकगुणोपलंभकम् ॥ ५ ॥
[श्रीमद्भागवते ६.२.११]

नाम सङ्कीर्तनं यस्य सर्वपापप्रणाशनम् ।
प्रणामो दुःखशमनस्तं नमामि हरिं परम् ॥ ६ ॥
[श्रीमद्भागवते १२.१३.२३]

चेतोदर्पणमार्जनं भवमहादावाग्निनिर्वापणं
श्रेयःकैरवचन्द्रिकावितरणं विद्यावधूजीवनम् ।
आनन्दाम्बुधिवर्धनं प्रतिपदं पूर्णामृतास्वादनं
सर्वात्मस्नपनं परं विजयते श्रीकृष्णसङ्कीर्तनम् ।। ७ ।।
[शिक्षाष्टके १]

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ।। ८ ।।
[बृहन्नारदीये ३८.१२६]

ना पुमानादिपुरुषः कलावस्त्येव रूपवान् ।
नामस्वरूपिणं तं तु जानीहि स तु केवलम् ।। ९ ।।
[श्रीकृष्णचैतन्यचरितामृते २.२.२६]

नाम चिन्तामणिः कृष्णश्चैतन्यरसविग्रहः ।
पूर्णः शुद्धो नित्यमुक्तोऽभिन्नत्वान्नामनामिनोः ।।१०।।
[हरिभक्तिविलासे २.११.५०३]

हरिनाम हरिस्तत्र हरेर्नामातिरिच्यते ।
नामाविमृश्य फलदं विमृश्य फलदो हरिः ।।११।।
[लघुभागवते]

श्रीमन्नाम प्रभोस्तस्य श्रीमूर्तेरप्यतिप्रियम् ।
जगद्धितं सुखोपास्यं सरसं तत्समं न हि ।।१२।।
[बृहद्भागवतामृते २.३.१८४]

ब्रह्माण्डानां कोटिसंख्याधिकानामैश्वर्यं यच्चेतना वा यदंशः ।
आविर्भूतं तन्महः कृष्णनाम तन्मे साध्यं साधनं जीवनं च ।।१३।।
[पद्यावल्याम् २३]

श्रद्धया हेलया नाम रटन्ति मम जन्तवः ।
तेषां नाम सदा पार्थ वर्त्तते हृदये मम ॥१४॥

न नाम-सदृशं ज्ञानं न नाम-सदृशं व्रतम् ।
न नाम-सदृशं ध्यानं न नाम-सदृशं फलम् ॥१५॥

न नाम-सदृशस्त्यागो न नाम-सदृशः शमः ।
न नाम-सदृशं पुण्यं न नाम-सदृशी गतिः ॥१६॥

नामैव परमा मूर्तिर्नामैव परमा गतिः ।
नामैव परमा शान्तिर्नामैव परमा स्थितिः ॥१७॥

नामैव परमा भक्तिर्नामैव परमा मतिः ।
नामैव परमा प्रीतिर्नामैव परमा स्मृतिः ॥१८॥

नामैव कारणं जन्तोर्नामैव प्रभुरेव च ।
नामैव परमाराध्यो नामैव परमो गुरुः ॥१९॥

[आदिपुराणे श्रीकृष्णार्जुनसंवादे, हरिभक्तिविलासे २.११.४६४-६९]

जयति जयति नामानन्दरूपं मुरारे-
र्विरमितनिजधर्मध्यानपूजादियत्नम् ।
कथमपि सकृदात्तं मुक्तिदं प्राणिनां यत्
परमममृतमेकं जीवनं भूषणं मे ॥२०॥

[बृहद्भागवतामृते १.१.९]

श्रीकृष्णनामामृतमात्महृद्यं
प्रेम्णा समास्वादनभङ्गिपूर्वम् ।
यत् सेव्यते जिह्विकयाऽविरामं
तस्याऽतुलं जल्पतु को महत्त्वम् ॥२१॥

[बृहद्भागवतामृते २.३.१५९]

तुण्डे ताण्डविनी रतिं वितनुते तुण्डावलीलब्धये
कर्णक्रोडकडंबिनी घटयते कर्णार्बुदेभ्यः स्पृहाम् ।
चेतःप्राङ्गणसङ्गिनी विजयते सर्वेन्द्रियाणां कृतिं
नो जाने जनिता कियद्भिरमृतैः कृष्णेति वर्णद्वयी ॥२२॥

[विदग्धमाधवे १.१५]

मधुरमधुरमेतन्मङ्गलं मङ्गलानां
सकलनिगमवल्लीसत्फलं चित्स्वरूपम् ।
सकृदपि परिगीतं श्रद्धया हेलया वा
भृगुवर ! नरमात्रं तारयेत् कृष्णनाम ॥२३॥

[प्रभासखण्डे]

श्रीचैतन्यमुखोद्गीर्णा हरेकृष्णेतिवर्णकाः ।
मज्जयन्तो जगत्प्रेम्णि विजयन्तां तदाह्वयाः ॥२४॥

[संक्षेपभागवतामृते १.४]

सूदिताश्रितजनार्तिराशये रम्यचिद्घनसुखस्वरूपिणे ।
नाम गोकुलमहोत्सवाय ते कृष्ण पूर्णवपुषे नमो नमः ॥२५॥

[कृष्णनामाष्टके ७]

नारदवीणोज्जीवन सुधोर्मिनिर्यासमाधुरीपूर ।
त्वं कृष्णनाम कामं स्फुर मे रसने रसेन सदा ॥२६॥

[कृष्णनामाष्टके ८]

मदेकबन्धो मत्सङ्गिन् मद्गुरो मन्महाधन ।
मन्निस्तारक मद्भाग्य मदानन्द नमोऽस्तु ते ॥२७॥

असाधुसाधुतादायिन्नतिनीचोच्चताकर ।
हा न मुञ्च कदाचिन्मां प्रेम्णा हृत्कण्ठयोः स्फुर ॥२८॥

[कृष्णलीलास्तवे ४१५-१६]

# श्रीचित्रकवित्वानि (१)।

१। द्व्यक्षराणि ।

रसासारसुसारोरुरसुरारिः ससार सः ।
संसारासिरसौ रासे सुरिरंसुः ससारसः ॥ १ ॥

चर्चोरुरोचिरुच्चोरा रुचिरोऽरं चराचरे ।
चौराचारोऽचिराच्चीरं रुचा चारुरचूचुरत् ॥ २ ॥

धरे धराधरधरं धाराधरधुरारुधम् ।
धीरधीराराधाधिरोधं राधा धुरंधरम् ॥ ३ ॥

२। एकाक्षरम् ।

निनुन्नानोननं नूनं नानूनोन्नाननोऽनुनीः ।
नानेनानां निनुन्नेनं नानौन्नानाननो ननु ॥ ४ ॥

३। चक्रबन्धः ।

गन्धाकृष्टगुरून्मदालिनि वने हारप्रभातिप्लुतं
संपुष्णन्तमुपस्कृताध्वनि यमीवीचिश्रियो रङ्गकम् ।
सद्यस्तुङ्गितविभ्रमं सुनिभृते शीतानिलैः सौख्यदे
देवं नागभुजं सदा रसमयं तं नौमि कंचिन्मुदे ॥ ५ ॥

४। सर्पबन्धः ।

रासे सारङ्गसंघाचितनवनलिनप्रायवक्षःस्थदामा
बर्हालंकारहारस्फुरदमलमहारागचित्रे जयाय ।
गोपालो दासवीथीललितहितरवस्फारहासः स्थिरात्मा
नव्योऽजस्रं क्षणोपाश्रितविततबलो वीक्ष्य रङ्गं बभासे ॥६॥

५। पद्मबन्धः ।

कलवाक्य सदालोक कलोदार मिलावक ।
कवलाद्याद्भुतानूक कनूताभीरबालक ॥ ७ ॥

६। प्रातिलोम्यानुलोम्यसमम् ।

तायिसारधराधारातिभायातमदारिहा ।
हारिदामतया भाति राधाराधरसायिता ॥ ८ ॥

७। गोमूत्रिकाबन्धः ।

सा मल्लरङ्गे रमया फुल्लसारा मुदेधिता ।
श्रमनीरधरा तुष्टा बल्लवीरासदेवता ॥ ९ ॥

८। मुरजबन्धः ।

शुभासारससारश्रीः प्रभासान्द्रमसारभा ।
भारसा महसावित्त तरसा रससारिताम् ॥१०॥

९। सर्वतोभद्रः ।

रासावहा हावसारा सा ललास सलालसा ।
बलारमा मारलावहासमाद्दमासहा ॥११॥

१०। बृहत्पद्मबन्धः ।

तारप्रस्फारतालं सरभसरसलं भासुरास्यं सुभालं
पापघ्नं गोपपालं करणहरकलं नीरभृद्धारनीलम् ।
चारुग्रीवं रुचालं रतमदतरलं चेतसा पीतचेलं
शीतप्रस्फीतशीलं वरय वरबलं वासुदेवं सुबालम् ॥१२॥

इति श्रीमद्रूपगोस्वामिविरचित—स्तवमालायां
श्रीचित्रकवित्वानि (१) संपूर्णानि ।

# श्रीचित्रकवित्वानि (२) ।

१। मुरजबन्धः, गोमूत्रिकाबन्धः, बद्धकवाटबन्धः, मुक्तकवाटबन्धः, शृङ्खलाबन्धः ।

ससार सा ससारसाऽऽस-सार-सास-सारसा ।
ससार साससार सा स सारसास-सार-सा ॥ १ ॥

२। महासर्वतोभद्रम् ।

साधाराश्रीः श्रीराधा सा धामाकामा मा-कामाऽधात् ।
राका धीमा माऽधीकारा श्रीमा मानेनेमामाश्रीः ॥ २ ॥

३। सर्वतोभद्रम् ।

धाराऽसाररसा राधा रासलास्यस्य लासरा ।
सालाकार-रकालासा रस्य-रस्यस्य रस्यर ॥ ३ ॥

४। छत्रबन्धः ।

तनुतां तनुतां राधाकृष्णयोश्चरितश्रुतिः ।
हृत्तापानां सुधासिन्धुधारा तां नु ततां नुत ॥ ४ ॥

५। खड्गबन्धः ।

राधामाधवयोः केलिः श्रुतिहृत्सुखदायिका ।
कामं तनोतु वः क्षेमं प्रेमानन्दौघनिर्भरा ॥
रासारम्भे नृत्य-गीत-वादित्रादि-मनोहरा ।
राभस्यसारा सौभाग्याऽधरीकृतपराऽपरा ॥ ५ ॥

६। शङ्खबन्धः ।

धेयमाधुर्यमर्यादा राधा माधवमार सा ।
सारमाऽवधमाधारा धेयमाधुर्यसौभगा ॥ ६ ॥

७। गदाबन्धः, पताकाबन्धः ।

रासतंसरसारंभे राधा साररमाधवं ।
बंधमार-रसाधाराभेऽरं सारसतंसरा ॥ ७ ॥

८। पद्मबन्धः ।

राधिका रुचिराकारा राकारासस्थलीसरा ।
रासलीलापरा सारारासारा गीः पिकाधिरा ॥ ८ ॥

९। चक्रबन्धः ।

यस्य श्रीतुलनां न कश्चन गमी भक्तौघ-तापार्दनो
ध्वस्तानाक्यबलच्छविः स न हि मां त्वं मुञ्च मोदक्षम ।
सन्नाथ व्रजकेलिशब्दनमनः-श्रद्धानदी-कौतुकी
कीलप्राय इहाध्वनीह सतते नो मत्समः पातकी ॥ ९ ॥

श्रीनाथपादकौतुक्यव्रतामोदी कविः शमी ।
यस्य ध्वस्ताऽच्छविः सन्नाऽश्रद्धा कश्चन मत्समः ॥१०॥

१०। शार्ङ्गबन्धः ।

श्रीकृष्णगाथा नामेयं कर्मणा च कदाचन ।
नासाद्यते पावनिका विना तस्य दयां हरेः ॥११॥

कथमस्य कृपासिंधोर्जनेषु च मिथो रतिः ।
जन्यते बहुजन्मान्ते सुकृतैः कारणायितैः ॥१२॥

चरणासव-लाभेन दारुणः करुणात्मताम् ।
मोहं हित्वा किल प्रैति तममुं सततं स्मर ॥१३॥

तस्य रूपं चेतसि च मंत्रवत् सततं लिख ।
तेन साधुतया कृष्णे भविष्यति समागमः ॥१४॥

श्रीनाथपादपाथोज–रसलालसचेतसा ।
कृतेयं ततमोदा च स्वजने कविना कथा ॥१५॥

श्रीशप्रीतिः स्वनामाकृति-कथनविनाभावपक्षे न विद्या–
ऽऽमोदश्रद्धाकलापादपि सुखदमिथोभाव–साम्राज्यतश्च ।
रम्या रम्यस्थलस्थ–प्रसरमदकलामोद–लक्ष्मी–समेत–
प्रेमासन्न–प्रगीतप्रणयिनि रुरुचे तात तद्वा विसाभा ॥१६॥

श्रीनाथपादपाथोज–रसलालसचेतसा ।
भाविता ततमोदस्थरसा सुकविना कृतिः ॥१७॥

११। प्रतिपादसर्वयमकम् ।

मम त्वयाऽममत्वया न वेहितं नवे हितम् ।
स्मराधिके स्म राधिके चर क्षमां च रक्ष माम् ॥१८॥

१२। सर्वयमकम् ।

ससार सा ससारसाऽऽस–सार–सास–सारसा ।
ससार साससार सा स सारसास–सार–सा ॥१९॥

१३। प्रत्यक्षरयमकम् ।

वि-वितत-नाना-माऽमा विविधधना नाववश्याश्या ।
सा साधु-धुततरारा मम ववले लेहि-हित-तनु नु ॥२०॥

१४। प्रातिलोम्यानुलोम्यसमम् ।

काऽऽधिदा सस्वभा राधे मानो माऽस्तु रमाधवे ।
वेधमारस्तु मा नो माऽधेराभा स्वसदाऽधिका ॥२१॥

मानसाररसाधारा साऽयंती वनमालिना ।
संललास महामोदासाऽऽश्वामाद–नि–साध्वसा ॥२२॥

साध्वसानि दमाश्वासा दा मोहामसलालसं ।
नालि मानवतीयं सा राधा साररसानमा ॥२३॥

१५। एकाक्षरम् ।

न नाना नाऽनिनोऽनेना नानाऽनेनाऽननं नु नुः ।
नूनं नो नानृ‌नऽनूनानऽनु नुन्नुन्ननून्निनीः ॥२४॥

इति श्रीकविकर्णपूरविरचितालङ्कारकौस्तुभे
श्रीचित्रकवित्वानि (२) संपूर्णानि ।

# श्रीनवद्वीपाष्टकम् ।

श्रीगौडदेशे सुरदीर्घिकाया-,स्तीरेऽतिरम्ये पुर-पुण्यमय्याः ।
लसन्तमानन्दभरेण नित्यं, तं श्रीनवद्वीपमहं स्मरामि ॥ १ ॥

यस्मै परव्योम वदन्ति केचित्, केचिच्च गोलोक इतीरयन्ति ।
वदन्ति वृन्दावनमेव तज्ज्ञा-,स्तं श्रीनवद्वीपमहं स्मरामि ॥ २ ॥

यः सर्व-दिक्षु स्फुरितैः सुशीतै-,र्नानाद्रुमैः सूपवनैः परीतः ।
श्रीगौर-मध्याह्न-विहार-पात्रै-, स्तं श्रीनवद्वीपमहं स्मरामि ॥ ३ ॥

श्रीस्वर्णदी यत्र विहार-भूमिः, सुवर्ण-सोपान-निबद्ध-तीरा ।
व्याप्तोर्मिभिर्गौर-वगाह-रूपै-,स्तं श्रीनवद्वीपमहं स्मरामि ॥ ४ ॥

महान्त्यनन्तानि गृहाणि यत्र, स्फुरन्ति हैमानि मनोहराणि ।
प्रत्यालयं यं श्रयते सदा श्री-,स्तं श्रीनवद्वीपमहं स्मरामि ॥ ५ ॥

विद्या-दया-क्षान्ति-मुखैः समस्तैः,सद्भिर्गुणैर्यत्र जनाः प्रपन्नाः ।
संस्तूयमाना ऋषि-देव-सिद्धै-,स्तं श्रीनवद्वीपमहं स्मरामि ॥ ६ ॥

यस्यान्तरे मिश्र-पुरन्दरस्य, सानन्द-साम्यैकपदं निवासः ।
श्रीगौर-जन्मादिक-लीलयाढ्य-,स्तं श्रीनवद्वीपमहं स्मरामि ॥ ७ ॥

गौरो भ्रमन् यत्र हरिः स्वभक्तैः, संकीर्तन-प्रेम-भरेण सर्वम् ।
निमज्जयत्युल्लसदुन्मदाब्धौ, तं श्रीनवद्वीपमहं स्मरामि ॥ ८ ॥

एतन्नवद्वीप-विचिन्तनाढ्यं, पद्याष्टकं प्रीतमनाः पठेद् यः ।
श्रीमच्छचीनन्दन-पादपद्मे, सुदुर्लभं प्रेम समाप्नुयात् सः ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचितं
श्रीनवद्वीपाष्टकं संपूर्णम् ।

## श्रीवृन्दावनाष्टकम् (१) ।

मुकुन्दमुरलीरव-श्रवणफुल्लहृद्वल्लवी-
कदम्बककरम्बितप्रतिकदम्बकुंजान्तरा ।
कलिन्दगिरिनन्दिनीकमलकन्दलान्दोलिना
सुगन्धिरनिलेन मे शरणमस्तु वृन्दाटवी ॥ १ ॥

विकुण्ठपुरसंश्रयाद्विपिनतोऽपि निःश्रेयसात्
सहस्रगुणितां श्रियं प्रदुहती रसश्रेयसीम् ।
चतुर्मुखमुखैरपि स्पृहिततार्णदेहोद्भवा
जगद्गुरुभिरग्रिमैः शरणमस्तु वृन्दाटवी ॥ २ ॥

अनारतविकस्वरव्रततिपुंजपुष्पावली-
विसारिवरसौरभोद्गम-रमाचमत्कारिणी ।
अमन्दमकरन्दभृद्विटपिवृन्दवन्दीकृत-
द्विरेफकुलवन्दिता शरणमस्तु वृन्दाटवी ॥ ३ ॥

क्षणद्युतिघनश्रियोर्व्रजनवीनयूनोः पदैः
सुवल्गुभिरलंकृता ललितलक्ष्मलक्ष्मीभरैः ।
तयोर्नखरमण्डलीशिखरकेलिचर्योचितै-
र्वृता किशलयांकुरैः शरणमस्तु वृन्दाटवी ॥ ४ ॥

व्रजेन्द्रसखनन्दिनीशुभतराधिकारक्रिया-
प्रभावजसुखोत्सवस्फुरितजङ्गमस्थावरा ।
प्रलम्बदमनानुजध्वनितवंशिका-काकली-
रसज्ञमृगमण्डला शरणमस्तु वृन्दाटवी ॥ ५ ॥

अमन्दमुदिराबुर्दाभ्यधिकमाधुरीमेदुर-
व्रजेन्द्रसुतवीक्षणोन्नटितनीलकण्ठोत्करा ।
दिनेशसुहृदात्मजाकृतनिजाभिमानोल्लस-
ल्लताखगमृगांगना शरणमस्तु वृन्दाटवी ॥ ६ ॥

अगण्यगुणनागरीगण-गरिष्ठगान्धर्विका-
मनोजरणचातुरीपिशुनकुंजपुंजोज्ज्वला ।
जगत्त्रयकलागुरोर्ललितलास्यवल्गत्पद-
प्रयोगविधिसाक्षिणी शरणमस्तु वृन्दाटवी ॥ ७ ॥

वरिष्ठहरिदासतापदसमृद्ध-गोवर्धना
मधूद्वहवधूचमत्कृति-निवासरासस्थला ।
अगूढगहनश्रियो मधुरिमव्रजेनोज्ज्वला
व्रजस्य सहजेन मे शरणमस्तु वृन्दाटवी ॥ ८ ॥

इदं निखिलनिष्कुटावलिवरिष्ठवृन्दाटवी-
गुणस्मरणकारि यः पठति सुष्ठु पद्याष्टकम् ।
वसन् व्यसनमुक्तधीरनिशमत्र सद्वासनः
स पीतवसने वशी रतिमवाप्य विक्रीडति ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां
श्रीवृन्दावनाष्टकं (१) संपूर्णम् ।

# श्रीवृन्दावनाष्टकम् (२) ।

न योगसिद्धिर्न ममास्तु मोक्षो,वैकुण्ठलोकेऽपि न पार्षदत्वम् ।
प्रेमापि न स्यादिति चेत्तरान्तु, ममास्तु वृन्दावन एव वासः ॥ १ ॥

तार्णं जनुर्यत्र विधिर्ययाचे, सद्भक्तचूडामणिरुद्धवोऽपि ।
वीक्ष्यैव माधुर्यधुरां तदस्मिन्,ममास्तु वृन्दावन एव वासः ॥ २ ॥

किं ते कृतं हन्त तपः क्षितीति,गोप्योऽपि भूमे स्तुवते स्म कीर्तिम् ।
येनैव कृष्णांघ्रिपदांकितेऽस्मिन् ,ममास्तु वृन्दावन एव वासः ॥ ३ ॥

गोपांगनालंपटतैव यत्र, यस्यां रसः पूर्णतमत्वमाप ।
यतो रसो वै स इति श्रुतिस्त-, न्ममास्तु वृन्दावन एव वासः ॥ ४ ॥

भाण्डीर-गोवर्धन-रासपीठै-, स्त्रिसीमके योजन-पंचकेन ।
मिते विभुत्वादमितेऽपि चास्मिन्,ममास्तु वृन्दावन एव वासः॥ ५ ॥

यत्राधिपत्यं वृषभानुपुत्र्या, येनोदयेत् प्रेमसुखं जनानाम् ।
यस्मिन्ममाशा बलवत्यतोऽस्मिन्,ममास्तु वृन्दावन एव वासः ॥६॥

यस्मिन् महारासविलासलीला,न प्राप यां श्रीरपि सा तपोभिः ।
तत्रोल्लसन्मंजु-निकुंजपुंजे, ममास्तु वृन्दावन एव वासः ॥ ७ ॥

सदा कुरु-न्यंकुमुखा विशंकं, खेलन्ति कूजन्ति पिकालिकीराः ।
शिखण्डिनो यत्र नटन्ति तस्मिन्, ममास्तु वृन्दावन एव वासः ॥८॥

वृन्दावनस्याष्टकमेतदुच्चैः, पठन्ति ये निश्चलबुधयस्ते ।
वृन्दावनेशांघ्रि-सरोजसेवां, साक्षाल्लभन्ते जनुषोऽन्त एव ॥९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितं
श्रीवृन्दावनाष्टकं (२) संपूर्णम् ।

# श्रीवृन्दावनाष्टकम् (३) ।

श्रीकृष्णवेणुरवफुल्ललतावितान !
　　गुञ्जन्मधुव्रतपिकालिपरीतकुञ्ज ! ।
सौरीसरोरुहसमर्चितवातगन्ध !
　　वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ १ ॥

निःश्रेयसाख्यवनतोऽपि विकुण्ठपूःस्थात्
　　शोभां सहस्रगुणितां दधदप्रमेय ! ।
यद्रामकृष्णचरणाङ्कसमर्चिताङ्ग !
　　वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ २ ॥

अश्रान्तपुष्पितलताव्रजपुष्पपुञ्ज-
　　विस्तारिसौरभचमत्कृतचंचलाक ! ।
वैकुण्ठनाथपरिकीर्तितकीर्तिमाल !
　　वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ ३ ॥

गोविन्दवेणुकलगीतरसज्ञलोक !
　　श्यामाङ्गदर्शननटद्बहुनीलकण्ठ ! ।
हे मर्त्यलोकसुभगत्वप्रसिद्धकेतो !
　　वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ ४ ॥

श्रीराधिकारसविवर्धकरासलीला-
　　तौर्यत्रिकोत्पुलकिताङ्गरुहैर्मनोज्ञ ! ।
सर्वज्ञकृष्णनटलास्यप्रयोगसाक्षिन् !
　　वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ ५ ॥

गोवर्धनो विजयते हरिदासवर्यः
　　सूर्यात्मजा च सुषमामधिकीकरोति ।

यत्राऽच्युतोऽपि विजहार सखिव्रजेन
वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ ६ ॥

सर्वत्र नष्टविभवा हरिभक्तिरत्र-
नृत्यं करोति किल वैष्णवमानसेषु ।
दिव्याङ्ग ! दिव्यपशुपक्षिलतादिलोक !
वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ ७ ॥

यत्त्यक्तुमिच्छति हरिर्न मनागपि त्वाम्
यत्रोद्धवो विधिरपीच्छति जन्म तार्णम् ।
कस्ते वनाधिप ! गुणान्कथयत्वतो विद्
वृन्दावन ! प्रशमयाशु मनोरुजं मे ॥ ८ ॥

वृन्दावनाष्टकमिदं स्थितधीर्मनुष्यः
श्रद्धाऽन्वितोऽनुश्रृणुयादथकीर्तयेद् यः ।
वृन्दावनस्य कृपया भुवि लब्धभोगो
भूत्वा हरिप्रणयभाजनमस्तु चान्ते ॥ ९ ॥

इति श्रीवनमालिदासशास्त्रिविरचितं
श्रीवृन्दावनाष्टकं (३) संपूर्णम् ।

# श्रीवृन्दावनमहिमामृतम् ।

वृन्दारण्ये वरं स्यां कृमिरपि परतो नो चिदानन्ददेहो
रङ्कोऽपि स्यामतुल्यः परमिह न परत्राद्भुतानन्तभूतिः ।
शून्योऽपि स्यामिह श्रीहरिभजन-लवेनातितुच्छार्थमात्रे
लुब्धो नान्यत्र गोपीजनरमण-पदाम्भोज-दीक्षा-सुखेऽपि ॥१॥

[शतक २, श्लोक १]

सौन्दर्यादि-महाचमत्कृतिनिधी दिव्यौ किशोरौ महा-
गौरश्यामतनुच्छवी निशि दिवा यत्रैव विक्रीडतः ।
यत्रैवाखिल-दिव्यकानन-गुणोत्कर्षोऽतिकाष्ठां गत-
स्तद्वृन्दाविपिनं कदा नु मधुरप्रेमानुवृत्त्या भजे ॥ २ ॥
[२. २५]

श्रीवृन्दावनवासि-पादरजसा सर्वाङ्गमागुण्ठयन्
श्रीवृन्दावनमेकमुज्ज्वलतमं पश्यन् समस्तोपरि ।
श्रीवृन्दावनमाधुरीभिरनिशं श्रीराधिकाकृष्णयो-
रप्यावेशमनुस्मरन्नधिवस श्रीधाम-वृन्दावनम् ॥ ३ ॥
[२. २७]

स्वात्मेश्वर्या ममाद्य प्रणयरस-महामाधुरी-सारमूर्त्या
कोऽपि श्यामः किशोरः कनकवररुचा श्रीकिशोर्या कयापि ।
क्रीडत्यानन्दसारान्तिम-परमचमत्कार-सर्वस्वमूर्ति-
र्नित्यानङ्गोत्तरंगैर्यदधि भज तदेवाद्य वृन्दावनं भोः ॥ ४ ॥
[२. २९]

धन्यो लोके मुमुक्षुर्हरिभजनपरो धन्यधन्यस्ततोऽसौ
धन्यो यः कृष्णपादाम्बुजरतिपरमो रुक्मिणीशप्रियोऽतः ।
याशोदेय-प्रियोऽतः सुबलसुहृदतो गोपीकान्तप्रियोऽतः
श्रीमद्वृन्दावनेश्वर्यतिरसविवशाराधकः सर्वमूर्ध्नि ॥ ५ ॥
[२. ३४]

मुक्तिर्याति यतो बहिर्बहिरहो सम्मार्जनीघातत-
स्त्रस्तास्ता वरसिद्धयो विदधते काक्वादि यत् सेवितुम् ।
यन्नाम्नैव विदूरगापि विलयं मायापि यायादहो
तद्वृन्दावनमत्यचिन्त्यमहिमादेहान्तमाश्रीयताम् ॥६॥
[३. ४४]

सदा खेलन्नित्यस्मर-तरलराधामधुपति-
स्फुरद् विद्याविद्यामय-सकलधामोपरि सदा ।
स्वमाधुर्यौज्ज्वल्यादिभिरितरसर्वाभिभवकृद्-
भुवि प्राप्तं वृन्दावनमिदमहो को न भजते ?७॥
[४. ५०]

श्रीवृन्दारण्य ! धन्योऽस्म्यतिपरममहात्वत्कृपा-पात्रितोऽस्मि
यातोऽहं येन दत्तो विधि-शुक-सनकाद्यर्थनीयः स्ववासः ।
गौरश्यामे महामोहन-वरमहसी नित्यकैशोरवेशे
नित्यैकानङ्गरंगे अपि परिचरितुं यन्ममाशापि दत्ता ॥८॥
[४. ८०]

श्रीवृन्दाटवि ! कोटिमातृ-परमस्निग्धस्वभावे ! रमे-
शाद्यैर्नित्यविचार्यमाण-परमाश्चर्यप्रभावे ! पदम् ।
स्वं चेल्लोचनगोचरीकृतवती वासं च सर्वोत्तमै-
मृग्यं दत्तवती तदा निजजने किं वा विलम्बादिह ॥ ९ ॥
[४. ८१]

दिव्यानन्तविचित्रवैभवरसान्मुह्यद् विकुण्ठेश्वरं
गान्धर्वाहृदयैकबन्धुमधुरप्रेमोन्मदान्धाखिलम् ।
विद्यानन्दसुधैकसिन्धुपरतो जाज्वल्यमानं क्षितौ
तद् वृन्दावनमप्रमेयरसदं प्राप्यान्यदीक्षेत कः ?१०॥
[५. १६]

यत्र श्रीराधिका तद्रसविवश-सदानन्दयोः सर्वकाल-
स्थेमा प्रेमामृताब्धिः परमरसचमत्कारसीमास्ति यत्र ।
यत्रैवाश्चर्यसीमा यदधि परतरो दिव्यसौभाग्यसीमा
श्रीवृन्दारण्यनामा जयति भगवतः सर्वधामातिधामा ॥११॥
[५. २३]

श्रीवृन्दावनमेव पावनतमं विज्ञानमुख्याखिलात्
श्रीवृन्दावनमेव साधनतमं सर्वार्थलब्धौ हठात् ।
श्रीवृन्दावनमेव साध्यपरमोत्कर्षैकविश्रामभूः
श्रीवृन्दावनमात्मकोटिपरमप्रेष्ठं न सेवेत कः ?॥१२॥
[५. ८५]

नानारत्नमयैर्विलक्षणफलैर्नानाप्रसूनोद्गमै-
र्नानापल्लव-पत्र-गुच्छ-कलिका-वृन्दादिभिः सुन्दरैः ।
नानाश्चर्यविसारि-सौरभभरैरानन्दखेलारुतै-
र्नानाश्चर्यखगैर्मनो मम हृतं वृन्दाटवी-शाखिभिः ॥१३॥
[५. ६३]

नानारत्नमयोरुशाखिरुचिरैर्नानामणीपक्षिभि-
र्नानारत्नमय-प्रसूननिचयै रत्नामृतांगैः फलैः ।
नानारत्नसुधा-मरन्दलहरी-निःस्यन्दिभिः शाखिभि-
र्नानारत्नमयस्थलीषु लसितैर्देदीप्ति वृन्दावनम् ॥१४॥
[५. ६४]

ऐश्वर्यं परमं च वेत्ति न मनाङ् नान्यं च कञ्चिद्रसं
न स्थाने परतः कदा त्वनुगतं नो वा कुतोऽप्यागतम् ।
कैशोरादपरं वयो न हि कदाप्यासादयन्न क्षणं
क्रीडातो विरतं तदेकमिथुनं वृन्दावने नन्दति ॥१५॥
[६. ६]

यत्रैवाखिलकार्यकारणकथाप्यत्यन्तमस्तं गता
यत्रात्मप्रभ-वैभवं न च चिदानन्दात्मकं भात्यहो ।
कृष्णप्रेमरसात्म-सर्वविभवैर्माधुर्यसारैर्युतं
श्रीवृन्दावन-नाम धाम तदिदं वर्वर्ति सर्वोपरि ॥१६॥
[७. ३८]

श्रीवृन्दावन-वन्दनाय सततं मूर्धास्तु बद्धादरो
जिह्वा विह्वलतामुपैतु सततं तत्सद्गुणोत्कीर्तने ।
हस्तौ तन्नवकुञ्जमार्जनविधौ पादौ च तत्राटने
श्रोत्रे तन्महिमश्रुतौ दृशि दृशौ नित्यं स्मृतौ स्तान्मनः ॥१७॥
[७. ४६]

जयति जयति राधा प्रेमसारैरगाधा
जयति जयति कृष्णस्तद्रसापारतृष्णः ।
जयति जयति वृन्दं तत्सखीनां द्वयैक्यं
जयति जयति वृन्दाकाननं तत्स्वधाम ॥१८॥
[६. ४५]

कुंजे कुंजेऽतिरङ्गादहह विहरतो यत्र राधाव्रजेन्दु
वृक्षे वृक्षे च यत्र प्रविलसति महादिव्यगन्धप्रसूनम् ।
पुष्पे पुष्पे मदान्धीकृत-मधुपकुलं स्यन्दमानामृतौघं
मोघं जन्मादि सर्वं तव यदि भजसे नैव वृन्दावनं तत् ॥१९
[१०. ५२]

श्रीवृन्दावन मम पावनं त्वमेव
श्रीवृन्दावन मम जीवनं त्वमेव ।
श्रीवृन्दावन मम भूषणं त्वमेव
श्रीवृन्दावन मम सद्यशास्त्वमेव ॥२०॥
[१२. ७८]

वृन्दारण्ये चर चरण ! दृक् ! पश्य वृन्दावनश्री-
र्जिह्वे ! वृन्दावनगुणगणान् कीर्तय श्रोत्र ! गृहाण ।
वृन्दाटव्या भज परिमलं घ्राण ! गात्र ! त्वमस्मिन्
वृन्दारण्ये लुठ पुलकितं कृष्ण-केलि-स्थलीषु ॥२१॥
[१७. ७]

कृपयतु मयि वृन्दारण्य-राज्ञी मनाग-
प्यति बहुलकृपोरुस्नेहभारादुदश्रुः ।
फलतु तदनुकंपा-कल्पवल्ली-फलं त्व-
द्भुतमधिवसतिर्मे तत्प्रियाराम-सीम्नि ॥२२॥
[१७. २४]

सकल-विभव-सारं सर्व-धर्मैक-सारं
सकल-भजन-सारं सर्व-सिद्ध्येक-सारम् ।
सकल-महिम-सारं वस्तु वृन्दावनान्तः
सकल-मधुरिमाम्भोराशिसारं विहारम् ॥२३॥
[१७. ८५]

हा वृन्दावन ! हा महारसमय-प्रेमैक संपन्निधे !
हा राधा-रतिनागर-स्मरकला-साक्षिन् ! मदेकप्रिय ।
हा रासेश्वर ! विश्वमूर्च्छन ! लता-वल्लीखगाद्यद्भुत !
श्रीमन् ! हा प्रकृतेः परादपि पर ! त्वं मे गतिस्त्वं गतिः ॥२४
[१७. १२२]

हरे कृष्ण कृष्णेति कृष्णेति मुख्यान्
महाश्चर्यनामावली-सिद्धमंत्रान् ।
कृपामूर्ति-चैतन्यदेवोपगीतान्
कदाऽभ्यस्य वृन्दावने स्यां कृतार्थः ॥२५॥
[१७. ८९]

इति श्रीप्रबोधानन्दसरस्वतीपादविरचितात्
श्रीवृन्दावनमहिमामृतादुद्धृतानि कतिचन श्लोकाः ।

# श्रीवृन्दादेव्यष्टकम् ।

गांगेय-चांपेय-तडिद्विनिन्दि-, रोचिः-प्रवाह-स्नपितात्मवृन्दे ।
बन्धूक-रन्धु-द्युति-दिव्यवासो, वृन्दे ! नुमस्ते चरणारविन्दम् ॥१॥

बिंबाधरोदित्वर-मन्दहास्य-, नासाग्र-मुक्ताद्युति-दीपितास्ये ।
विचित्र-रत्नाभरणश्रियाढ्ये, वृन्दे ! नुमस्ते चरणारविन्दम् ॥२॥

समस्त-वैकुण्ठ-शिरोमणौ श्री-,कृष्णस्य वृन्दावन-धन्य-धाम्नि ।
दत्ताधिकारे वृषभानु-पुत्र्या, वृन्दे ! नुमस्ते चरणारविन्दम् ॥३॥

त्वदाज्ञया पल्लव-पुष्प-भृंग-, मृगादिभिर्माधव-केलिकुञ्जाः ।
मध्वादिभिर्भान्ति विभूष्यमाणा वृन्दे ! नुमस्ते चरणारविन्दम् ॥४॥

त्वदीय-दूत्येन निकुञ्ज-यूनो-, रत्युत्कयोःकेलि-विलास-सिद्धिः ।
त्वत्-सौभगं केन निरुच्यतां तद्,वृन्दे ! नुमस्ते चरणारविन्दम् ॥५॥

रासाभिलाषो वसतिश्च वृन्दा-, वने त्वदीशांघ्रि-सरोज-सेवा ।
लभ्या च पुंसां कृपया तवैव, वृन्दे ! नुमस्ते चरणारविन्दम् ॥६॥

त्वं कीर्त्यसे सात्वत-तंत्रविद्भि-,र्लीलाभिधाना किल कृष्ण-शक्तिः ।
तवैव मूर्तिस्तुलसी नृलोके, वृन्दे ! नुमस्ते चरणारविन्दम् ॥७॥

भक्त्या विहीना अपराध-लक्षैः, क्षिप्ताश्च कामादि-तरंग-मध्ये ।
कृपामयि ! त्वां शरणं प्रपन्ना, वृन्दे ! नुमस्ते चरणारविन्दम् ॥८॥

वृन्दाष्टकं यः शृणुयात् पठेद् वा, वृन्दावनाधीश-पदाब्ज-भृंगः ।
स प्राप्य वृन्दावन-नित्यवासं, तत् प्रेमसेवां लभते कृतार्थः ॥९॥

इति श्रीमद्विश्वनाथचक्रवर्त्तिठक्कुरविरचित-स्तवामृतलहर्यां
श्रीवृन्दादेव्यष्टकं संपूर्णम् ।

# श्रीनन्दीश्वराष्टकम् ।

साक्षान्महत्तम–महाघन–चिद्विलास–
　पुंजः स्वयं　शिखरि–शेखरतामुपेतः ।
यत्रेश्वरः स खलु नन्दति येन वेति
　नन्दीश्वरः स मदमन्दमुदं दधातु ॥ १ ॥

ब्रह्माण्डवप्रगतलोक–निकायशस्य–
　सन्तर्पि　कृष्णचरितामृत–निर्झराढ्यः ।
पर्जन्य सन्तति–सुखास्पद–पूर्वको यो
　नन्दीश्वरः स मदमन्दमुदं दधातु ॥ २ ॥

यत्सौभगं भगवता धरणीभृतापि
　न प्राप्यते सुरगिरिः स हि को वराकः ।
नन्दः स्वयं वसति यत्र सपुत्रदारो
　नन्दीश्वरः स मदमन्दमुदं दधातु ॥ ३ ॥

यत्र व्रजाधिप–पुराप्रतिमप्रकाश–
　प्रासाद–मूर्धकलशोपरि–नृत्यरंगी　।
बर्हीक्ष्यते भुवि जयध्वज–केतुभूतो
　नन्दीश्वरः स मदमन्दमुदं दधातु ॥ ४ ॥

यच्छृङ्गसंगत–सुगंध–शिलाधिरूढः
　कृष्णः सतृष्णनयनः परितो व्रजाब्जम् ।
आलोकते द्विषडुदारदलाटवी स्ता
　नन्दीश्वरः स मदमन्दमुदं दधातु ॥ ५ ॥

जिग्ये यदीय तटराजि–सरोजराजि–
　सौरभ्य　मंजुल–सरो–जलशीकरेण ।

त्रैलोक्यवर्तिवरतीर्थयशो रसौघै-
 र्नन्दीश्वरः स मदमन्दमुदं दधातु ॥ ६ ॥

यत्तीरसंगि-पवनैरभिमृश्यमानाः
 स्युः पावना अपि जनाः स्वदशां परेषाम् ।
सा पावनाख्यसरसी यदुपत्यकायां
 नन्दीश्वरः स मदमन्दमुदं दधातु ॥ ७ ॥

कृष्णाख्यमस्ति महदुज्ज्वल-नीलरत्नं
 सूते तदेव वसु तत् स्वभुवैव दृष्टम् ।
तल्लभ्यते सुकृतिनैव यदीयसानौ
 नन्दीश्वरः स मदमन्दमुदं दधातु ॥ ८ ॥

दुर्वासना-शतवृतोऽपि भवत्प्रयत्नः
 पद्याष्टकं पठति यः शिखरीश तुभ्यम् ।
कृष्णांघ्रि-पद्मरस एव सदा सतृष्ण-
 मेतं जनं कुरु गुरुप्रणयं दधानम् ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितं
श्रीनन्दीश्वराष्टकं संपूर्णम् ।

# श्रीश्यामकुण्डाष्टकम् ।

वृषभ-दनुज-नाशानन्तरं यत् स्वगोष्ठी-
 मयसि वृषभ-शत्रो मा स्पृश त्वं वदन्त्याम् ।
इति वृषरविपुत्र्यां कृष्णपार्ष्णि प्रखातं
 तदति-विमल-नीरं श्यामकुण्डं गतिर्मे ॥ १ ॥

त्रिजगति निवसद् यत् तीर्थवृन्दं तमोघ्नं
　व्रजनृपति–कुमारेणाहृतं　　तत्　समग्रम् ।
स्वयमिदमवगाढं　यन्महिम्नः　प्रकाशं
　तदति–विमल–नीरं　श्यामकुण्डं　गतिर्मे ॥ २ ॥

यदति–विमल–नीरे　तीर्थरूपे　प्रशस्ते
　त्वमपि कुरु कृशांगि ! स्नानमत्रैव राधे ।
इति विनय–वचोभिः प्रार्थनाकृत् स कृष्ण–
　स्तदति–विमल–नीरं　श्यामकुण्डं　गतिर्मे ॥ ३ ॥

वृषभ–दनुज–नाशादुत्थ–पापं　समाप्तं
　द्युमणि–सख–जयोच्चैर्वर्जयित्वेति　तीर्थम् ।
निजमखिल–सखीभिः　कुण्डमेव　प्रकाश्यं
　तदति–विमल–नीरं　श्यामकुण्डं　गतिर्मे ॥ ४ ॥

यदति सकल–तीर्थैस्त्यक्तवाक्यैः प्रभीतैः
　सविनयमभियुक्तैः　कृष्णचन्द्रे　निवेद्य ।
अगतिकगति–राधा वर्जनान्नो गतिः का
　तदति–विमल–नीरं　श्यामकुण्डं　गतिर्मे ॥ ५ ॥

यदति–विकल–तीर्थं कृष्णचन्द्रं प्रसुस्थं
　अति–लघु–नति–वाक्यैः सुप्रसन्नेति राधा ।
विविध–चटुल–वाक्यैः प्रार्थनाढ्या भवन्ती
　तदति–विमल–नीरं　श्यामकुण्डं　गतिर्मे ॥ ६ ॥

यदतिललित–पादैस्तां प्रसाद्याप्तैर्थ्यै–
　स्तदतिशय–कृपार्द्रैः　संगमेन　प्रविष्टैः ।
व्रज–नवयुव–राधाकुण्डमेव　प्रपन्नं
　तदति–विमल–नीरं　श्यामकुण्डं　गतिर्मे ॥ ७ ॥

यदति-निकट-तीरे क्लप्त-कुञ्जं सुरम्यं
सुबल-बटु-मुखेभ्यो राधिकाद्यैः प्रदत्तम् ।
विविध-कुसुम-वल्ली-कल्पवृक्षादि-राजं
तदति-विमल-नीरं श्यामकुण्डं गतिर्मे ॥ ८ ॥

परिपठति सुमेधाः श्यामकुण्डाष्टकं यो
नव-जलधर-रूपे स्वर्णकान्त्यां च रागात् ।
व्रज-नरपति-पुत्रस्तस्य लभ्यः सुशीघ्रं
सह सगण-सखीभी राधया स्यात् सुभज्यः ॥ ९ ॥

इति श्रीश्यामकुण्डाष्टकं संपूर्णम् ।

# श्रीकृष्णकुण्डाष्टकम् ।

किं तपश्चचार तीर्थलक्षमक्षयं पुरा
सुप्रसीदति स्म कृष्ण एव सद्वरं यतः ।
यत्र वासमाप साधु तत् समस्त-दुर्लभे
तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ १ ॥

यद्यरिष्टदानवोऽपि दानदो महानिधे-
रस्मदादि-दुर्मतिभ्य इत्यहोवसीयते ।
यो मृतिच्छलेन यत्र मुक्तिमद्भुतां व्यधात्
तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ २ ॥

गोवधस्य निष्कृतिस्त्रिलोकतीर्थ-कोटिभी-
राधयेत्यवादि तेन ता हरिः समाह्वयत् ।
यत्र पार्ष्णिघातजे ममज्ज च स्वयं मुदा
तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ ३ ॥

क्वापि पापनाश एव कर्मबन्ध-बन्धनाद्
　ब्रह्मसौख्यमेव विष्णुलोकवासिता क्वचित् ।
प्रेमरत्नमत्ययत्नमेव यत्र लभ्यते
　तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ ४ ॥

फुल्ल-माधवी-रसाल-नीपकुंजमण्डले
　भृंगकोकिलादि-काकली यदंचति ।
आश्चर्यामिकावितर्क-कोटिभेद-सौरभं
　तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ ५ ॥

दोल-केलि-चित्ररास-नृत्यगीतिवादनै-
　र्निह्नव-प्रसूनयुद्ध-सीधुपान-कौतुकैः ।
यत्र खेलतः किशोरशेखरौ सहालिभि-
　स्तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ ६ ॥

दिव्यरत्ननिर्मितावतार-सारसौष्ठवै-
　श्छत्रिका विराजि चारु कुट्टिम-प्रभाभरैः ।
सर्वलोक-लोचनातिधन्यता यतो भवेत्
　तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ ७ ॥

माथुरं विकुण्ठतोऽपि जन्मधाम दुर्लभं
　वासकाननन्ततोऽपि पाणिना धृतो गिरिः ।
श्रीहरेस्ततोऽपि यत्परं सरोऽतिपावनं
　तत्र कृष्णकुण्ड एव संस्थितिः स्तुतास्तु नः ॥ ८ ॥

कृष्णकुण्डतीरवास-साधकं पठेदिदं
　योऽष्टकं धियं निमज्य केलिकुंजराजितोः ।
राधिका-गिरीन्द्रधारिणोः पदांबुजेषु स
　प्रेमदास्यमेव शीघ्रमाप्नुयादनामयम् ॥ ९ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितं श्रीकृष्णकुण्डाष्टकं संपूर्णम् ।

# श्रीराधाकुण्डाष्टकम् ।

वृषभदनुजनाशान्नर्मधर्मोक्तिरङ्गै-
निखिल-निजसखीभिर्यत् स्वहस्तेन पूर्णम् ।
प्रकटितमपि वृन्दारण्यराज्या प्रमोदै-
स्तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ १ ॥

व्रजभुवि मुरशत्रोः प्रेयसीनां निकामै-
रसुलभमपि तूर्णं प्रेमकल्पद्रुमं तम् ।
जनयति हृदि भूमौ स्नातुरुच्चैः प्रियं य-
त्तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ २ ॥

अघरिपुरपि यत्नादत्र देव्याः प्रसाद-
प्रसरकृतकटाक्षप्राप्तिकामः प्रकामम् ।
अनुसरति यदुच्चैःस्नानसेवानुबन्धै-
स्तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ३ ॥

व्रजभुवनसुधांशोः प्रेमभूमिर्निकामं
व्रजमधुरकिशोरीमौलिरत्नप्रियेव ।
परिचितमपि नाम्ना यच्च तेनैव तस्या-
स्तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ४ ॥

अपि जन इह कश्चिद् यस्य सेवाप्रसादैः
प्रणयसुरलता स्यात्तस्य गोष्ठेन्द्रसूनोः ।
सपदि किल मदीशा-दास्यपुष्पप्रशस्या
तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ५ ॥

तटमधुरनिकुञ्जाः क्लृप्तनामान उच्चै-
र्निजपरिजनवर्गैः संविभज्याश्रितास्तैः ।

मधुकर-रुतरम्या यस्य राजन्ति काम्या-
स्तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ६ ॥

तटभुवि वरवेद्यां यस्य नर्मातिहृद्यां
मधुरमधुरवार्तां गोष्ठचन्द्रस्य भंग्या ।
प्रथयति मिथ ईशा प्राणसख्यालिभिः सा
तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ७ ॥

अनुदिनमतिरङ्गैः प्रेममत्तालिसंघै-
र्वरसरसिजगन्धैर्हारिवारिप्रपूर्णे ।
विहरत इह यस्मिन् दम्पती तौ प्रमत्तौ
तदतिसुरभि राधाकुण्डमेवाश्रयो मे ॥ ८ ॥

अविकलमति देव्याश्चारु कुण्डाष्टकं यः
परिपठति तदीयोल्लासिदास्यार्पितात्मा ।
अचिरमिह शरीरे दर्शयत्येव तस्मै
मधुरिपुरतिमोदैः श्लिष्यमाणां प्रियां ताम् ॥ ९ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीराधाकुण्डाष्टकं संपूर्णम् ।

## श्रीदाननिर्वर्तनकुण्डाष्टकम् ।

स्व-दयित-गिरिकच्छे गव्य-दानार्थमुच्चैः
कपट-कलह-केलिं कुर्वतोर्नव्ययूनोः ।
निजजनकृत-दर्पैः फुल्लतोरीक्षकेऽस्मिन्
सरसि भवतु वासो दाननिर्वर्तने नः ॥ १ ॥

निभृतमजनि यस्माद्दान-निर्वृत्तिरस्मि-
न्नत इदमभिधानं प्राप यत्तत् सभायाम् ।
रसविमुख-निगूढे तत्र तज्ज्ञैकवेद्ये
सरसि भवतु वासो दाननिर्वर्तने नः ॥ २ ॥

अभिनव-मधुगन्धोन्मत्त-रोलंबसंघ-
ध्वनि-ललित-सरोजव्रात-सौरभ्य-शीते ।
नव-मधुर-खगाली-क्ष्वेलि-संचार-कम्रे
सरसि भवतु वासो दाननिर्वर्तने नः ॥ ३ ॥

हिम-कुसुम-सुवास-स्फार-पानीयपूरे
रस-परिलसदाली-शालिनोर्नव्ययूनोः ।
अतुल-सलिलखेला-लब्ध-सौभाग्यफुल्ले
सरसि भवतु वासो दाननिर्वर्तने नः ॥ ४ ॥

दरविकसित-पुष्पैर्वासितान्तर्दिगन्ताः
खग-मधुप-निनादैर्मोदित-प्राणिजाताः ।
परित उपरि यस्य क्ष्मारुहा भान्ति तस्मिन्
सरसि भवतु वासो दाननिर्वर्तने नः ॥ ५ ॥

निज-निज-नवकुंजे गुंजि-रोलंब-पुंजे
प्रणयि-नव-सखीभिः संप्रवेश्य प्रियौ तौ ।
निरुपम-नवरंगस्तन्यते यत्र तस्मिन्
सरसि भवतु वासो दाननिर्वर्तने नः ॥ ६ ॥

स्फटिक-सममतुच्छं यस्य पानीयमच्छं
खग-नर-पशु-गोभिः संपिबन्तीभिरुच्चैः ।
निज-निज-गुणवृद्धिर्लभ्यते द्रागमुष्मिन्
सरसि भवतु वासो दाननिर्वर्तने नः ॥ ७ ॥

सुरभि-मधुर-शीतं यत् पयः प्रत्यहं ताः
सखिगण-परिवीतो व्याहरन् पाययन् गाः ।
स्वयमथ पिबति श्रीगोपचन्द्रोऽपि तस्मिन्
सरसि भवतु वासो दाननिर्वर्तने नः ॥ ८ ॥

पठति सुमतिरेतद्दाननिर्वर्तनाख्यं
प्रथितमहिम-कुण्डस्याष्टकं यो यतात्मा ।
स च नियत-निवासं सुष्ठु संलभ्य काले
कलयति किल राधाकृष्णयोर्दानलीलाम् ॥ ९ ॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीदाननिर्वर्तनकुण्डाष्टकं संपूर्णम् ।

## श्रीगोवर्धनाष्टकम् (१) ।

गोविन्दास्योत्तंसितवंशीक्वणितोद्य-
ल्लास्योत्कण्ठामत्तमयूरव्रजवीत ! ।
राधाकुण्डोत्तुंगतरंगांकुरितांग !
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ १ ॥

यस्योत्कर्षाद्विस्मितधीभिर्व्रजदेवी-
वृन्दैर्वर्यं वर्णितमास्ते हरिदास्यम् ।
चित्रैर्युञ्जन् स द्युतिपुञ्जैरखिलाशां
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ २ ॥

विन्दद्भिर्यो मन्दिरतां कन्दरवृन्दैः
कन्दैश्चेन्दोर्बन्धुभिरानन्दयतीशम् ।
वैदूर्याभैर्निर्झरतोयैरपि सोऽयं
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ ३ ॥

शश्वद्विश्वालंकरणालंकृतिमेध्यैः
प्रेम्णा धौतैर्धातुभिरुद्दीपितसानो ! ।
नित्याक्रन्दत्कन्दर ! वेणुध्वनिहर्षात्
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ ४ ॥

प्राज्या राजिर्यस्य विराजत्युपलानां
कृष्णेनासौ सन्ततमध्यासितमध्या ।
सोऽयं बन्धुर्बन्धुरधर्मा सुरभीणां
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ ५ ॥

निर्धुन्वानः संहृतिहेतुं घनवृन्दं
जित्वा जंभारातिमसंभावितबाधम् ।
स्वानां वैरं यः किल निर्यापितवान् सः
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ ६ ॥

बिभ्राणो यः श्रीभुजदण्डोपरि भर्तु-
श्छत्रीभावं नाम यथार्थं स्वमकार्षीत् ।
कृष्णोपज्ञं यस्य मखस्तिष्ठति सोऽयं
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ ७ ॥

गान्धर्वायाः केलिकलाबान्धव ! कुंजे
क्षुण्णैस्तस्याः कंकणहारैः प्रयतांग ! ।
रासक्रीडामण्डितयोपत्यकयाढ्य !
प्रत्याशां मे त्वं कुरु गोवर्धन ! पूर्णाम् ॥ ८ ॥

अद्रिश्रेणीशेखर ! पद्याष्टकमेतत्
कृष्णांभोदप्रेष्ठ ! पठेद्यस्तव देही ।
प्रेमानन्दं तुन्दिलयन् क्षिप्रममन्दं
तं हर्षेण स्वीकुरुतां ते हृदयेशः ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित–स्तवमालायां मत्तमयूराख्यं श्रीगोवर्धनाष्टकं (१) संपूर्णम् ।

# श्रीगोवर्धनाष्टकम् (२) ।

नीलस्तंभोज्ज्वल-रुचिभरैर्मण्डिते बाहुदण्डे
छत्रच्छायां दधदघरिपोर्लब्धसप्ताहवासः ।
धारापातग्लपितमनसां रक्षिता गोकुलानां
कृष्णप्रेयान् प्रथयतु सदा शर्म गोवर्धनो नः ॥ १ ॥

भीतो यस्मादपरिगणयन् बान्धवस्नेहबन्धान्
सिन्धावद्रिस्त्वरितमविशत् पार्वतीपूर्वजोऽपि ।
यस्तं जंभद्विषमकुरुत स्तंभसंभेदशून्यं
स प्रौढात्मा प्रथयतु सदा शर्म गोवर्धनो नः ॥ २ ॥

आविष्कृत्य प्रकटमुकुटाटोपमंगं स्थवीयः
शैलोऽस्मीति स्फुटमभिदधत्तुष्टिविस्फारदृष्टिः ।
यस्मै कृष्णः स्वयमरसयद् बल्लवैर्दत्तमन्नं
धन्यः सोऽयं प्रथयतु सदा शर्म गोवर्धनो नः ॥ ३ ॥

अद्याप्यूर्जप्रतिपदि महान् भ्राजते यस्य यज्ञः
कृष्णोपज्ञं जगति सुरभीसैरिभीक्रीडयाढ्यः ।
शष्पालंबोत्तमतटतया यः कुटुम्बं पशूनां
सोऽयं भूयः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ४ ॥

श्रीगान्धर्वादयितसरसीपद्मसौरभ्यरत्नं
हृत्वा शंकोत्करपरवशैरस्वनं संचरद्भिः ।
अंभःक्षोदप्रहरिककुलेनाकुलेनानुयातै-
र्वातैर्जुष्टः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ५ ॥

कंसारातेस्तरिविलसितैरातरानंगरंगै-
राभीरीणां प्रणयमभितः पात्रमुन्मीलयन्त्याः ।

धौतग्रावावलिरमलिनैर्मानसामर्त्यसिन्धो-
वींचिव्रातैः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ६ ॥

यस्याध्यक्षः सकलहठिनामाददे चक्रवर्ती
शुल्कं नान्यद् व्रजमृगदृशामर्पणाद्विग्रहस्य ।
घट्टस्योच्चैर्मधुकररुचस्तस्य धामप्रपंचैः
श्यामप्रस्थः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ७ ॥

गान्धर्वायाः सुरतकलहोद्दामतावावदूकैः
क्लान्तश्रोत्रोत्पलवलयिभिः क्षिप्तपिंछावतंसैः ।
कुंजैस्तल्पोपरि परिलुठद्वैजयन्तीपरीतैः
पुण्यांगश्रीः प्रथयतु सदा शर्म गोवर्धनो नः ॥ ८ ॥

यस्तुष्टात्मा स्फुटमनुपठेच्छ्रद्धया शुद्धयान्त-
र्मध्यः पद्याष्टकमचटुलः सुष्ठु गोवर्धनस्य ।
सान्द्रं गोवर्धनधरपदद्वन्द्वशोणारविन्दे
विन्दन् प्रेमोत्करमिह करोत्यद्रिराजे स वासम् ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित-स्तवमालायां श्रीगिरीन्द्रवासानन्ददं
श्रीगोवर्धनाष्टकं (२) संपूर्णम् ।

# श्रीगोवर्धनाष्टकम् (३) ।

कृष्णप्रसादेन समस्तशैल-,साम्राज्यमाप्नोति च वैरिणोऽपि ।
शक्रस्य यः प्राप बलिं स साक्षाद्, गोवर्धनो मे दिशतामभीष्टम् ॥१॥

स्वप्रेष्ठ-हस्तांबुज-सौकुमार्य-, सुखानुभूतेरतिभूमिवृत्तेः ।
महेन्द्र-वज्राहतिमप्यजानन्, गोवर्धनो मे दिशतामभीष्टम् ॥२॥

यत्रैव कृष्णो वृषभानुपुत्र्या, दानं गृहीतुं कलहं वितेने ।
श्रुतेः स्पृहा यत्र महत्यतः श्री-,गोवर्धनो मे दिशतामभीष्टम् ॥३॥

स्नात्वा सरः स्वाशु समीर-हस्ती, यत्रैव नीपादि-पराग-धूलीः ।
आलोलयन् खेलति चारु स श्री-, गोवर्धनो मे दिशतामभीष्टम् ॥४॥

कस्तूरिकाभिः शयितं किमत्रे, त्यूहं प्रभोः स्वस्य मुहुर्वितन्वन् ।
नैसर्गिक-स्वीयशिला-सुगन्धै-, गोवर्धनो मे दिशतामभीष्टम् ॥५॥

वंश-प्रतिध्वन्यनुसारवर्त्म, दिदृक्षवो यत्र हरिं हरिण्यः ।
यान्त्यो लभन्ते न हि विस्मिताः स, गोवर्धनो मे दिशतामभीष्टम् ॥६॥

यत्रैव गंगामनु नावि राधा-, मारोह्य मध्ये तु निमग्ननौकः ।
कृष्णो हि राधानुगलो बभौ स, गोवर्धनो मे दिशतामभीष्टम् ॥७॥

विना भवेत् किं हरिदासवर्य-, पदाश्रयं भक्तिरतः श्रयामि ।
यमेव सप्रेम निजेशयोः श्री-, गोवर्धनो मे दिशतामभीष्टम् ॥८॥

एतत् पठेद् यो हरिदासवर्य-, महानुभावाष्टकमार्द्रचेताः ।
श्रीराधिका-माधवयोः पदाब्ज-, दास्यं स विन्देदचिरेण साक्षात् ॥९॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचितं
श्रीगोवर्धनाष्टकं (३) संपूर्णम् ।

# श्रीगोवर्धनाष्टकम् (४) ।

श्रीकृष्णचन्द्रभुजदण्डवरे विराजन्
सप्ताहमिन्द्रकृतवर्षभयाद् व्रजस्य ।
रक्षां विधाय दलितेन्द्रकृताभिमान !
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ १ ॥

आविर्भवन्प्रकटरूपतया हरिस्त्वां
प्राभक्षयत्सुबहुगोपकुलार्पितान्नम् ।
तुष्टस्त्वमाशु वरहर्षितगोपलोक !
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ २ ॥

पापक्षयाय धृतमानसजाह्नवीक !
फुल्लद् रसालकुलकोकिलकाकलीक ! ।
राधासरःप्रभृतिदीर्घजलाशयाढ्य !
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ ३ ॥

कूजद् विहङ्गमकदंबकदंबशोभ !
नृत्यन्मयूरकुलशोभितदीर्घशृङ्ग ! ।
नीलांबुदाभहरिगात्रसमानगात्र !
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ ४ ॥

दर्पं हरेर्दलयता हरिणा बलेन
नन्दादिगोपनिवहैः सह पूजिताङ्ग ! ।
अद्यापि पूज्यपद ! कार्तिकपक्षतौ हे
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ ५ ॥

कुञ्जैश्च गुञ्जदलिपुञ्जसुमञ्जु पुष्पैः
कृष्णस्य खेलनसुखैः ससखिव्रजस्य ।
शोभाढ्यगह्वरकुलैश्च परीतदेह !
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ ६ ॥

छत्रीभवन् हरिकरोपरि स्वं यथार्थं
नामाऽकरोस्त्वमपि गोकुलवर्धनाद्वा ।
धातुव्रजैरपि च दीपितसानुभाग !
गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ ७ ॥

यः पूजितो विधिगिरीशमहेन्द्रमुख्यै-
　　र्देवैश्च तेन हरिणा परिपूजितांघ्रे ! ।
कस्तेऽद्रिराज ! महिमानमतो ब्रवीतु
　　गोवर्धनाऽऽशु कुरु पूर्णमनोरथं माम् ॥ ८ ॥

गोवर्धनाष्टकमिदं कृतधीर्मनुष्यः
　　श्रद्धान्वितोऽनुश्रृणुयादथ वर्णयेद्यः ।
गोवर्धनस्य कृपया भुवि लब्धभोगो
　　भूत्वा हरिप्रणयभाजनमस्तु चान्ते ॥ ९ ॥

इति श्रीवनमालिदासशास्त्रिविरचितं
श्रीगोवर्धनाष्टकं (४) संपूर्णम् ।

# श्रीगोवर्धनवासप्रार्थनादशकम् ।

निजपतिभुजदण्डच्छत्रभावं प्रपद्य
　　प्रतिहतमदधृष्टोद्दण्डदेवेन्द्रगर्व ।
अतुलपृथुलशैलश्रेणिभूप प्रियं मे
　　निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ १ ॥

प्रमदमदनलीलाः कन्दरे कन्दरे ते
　　रचयति नवयूनोर्द्वन्द्वमस्मिन्नमन्दम् ।
इति किल कलनार्थं लग्नकस्तद्द्वयोर्मे
　　निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ २ ॥

अनुपम-मणिवेदी-रत्नसिंहासनोर्वी-
　　रुहझर-दरसानुद्रोणि-संघेषु रंगैः ।
सह बल-सखिभिः संखेलयन् स्वप्रियं मे
　　निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ३ ॥

रसनिधि-नवयूनोः साक्षिणीं दानकेले-
द्युतिपरिमलविद्धां श्यामवेदीं प्रकाश्य ।
रसिकवरकुलानां मोदमास्फालयन्मे
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ४ ॥

हरिदयितमपूर्वं राधिका-कुण्डमात्म-
प्रियसखमिह कण्ठे नर्मणाऽऽलिंग्य गुप्तः ।
नवयुवयुग-खेलास्तत्र पश्यन्रहो मे
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ५ ॥

स्थल-जल-तल-शष्पैर्भूरुहच्छायया च
प्रतिपदमनुकालं हन्त संवर्धयन् गाः ।
त्रिजगति निजगोत्रं सार्थकं ख्यापयन्मे
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ६ ॥

सुरपतिकृत-दीर्घद्रोहतो गोष्ठरक्षां
तव नव-गृहरूपस्यान्तरे कुर्वतैव ।
अघ-बक-रिपुणोच्चैर्दत्तमान द्रुतं मे
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ७ ॥

गिरिनृप हरिदासश्रेणिवर्येति-नामा-
मृतमिदमुदितं श्रीराधिकावक्त्रचन्द्रात् ।
व्रजनव-तिलकत्वे क्लृप्त वेदैः स्फुटं मे
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ८ ॥

निज-जनयुत-राधाकृष्णमैत्रीरसाक्त-
व्रजनर-पशु-पक्षि-व्रात-सौख्यैकदातः ।
अगणित-करुणत्वान्मामुरीकृत्य तान्तं
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥ ९ ॥

निरुपधि-करुणेन श्रीशचीनन्दनेन
त्वयि कपटि-शठोऽपि त्वत्प्रियेणार्पितोऽस्मि ।
इति खलु मम योग्यायोग्यतां तामगृह्णन्
निज-निकट-निवासं देहि गोवर्धन त्वम् ॥१०॥

रसद्-दशकमस्य श्रील-गोवर्धनस्य
क्षितिधर-कुलभर्तुर्यः प्रयत्नादधीते ।
स सपदि सुखदेऽस्मिन् वासमासाद्य साक्षा-
च्छुभद-युगलसेवारत्नमाप्नोति तूर्णम् ॥११॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीगोवर्धनवासप्रार्थनादशकं संपूर्णम् ।

# श्रीगोवर्धनाश्रयदशकम् ।

सप्ताहं मुरजित्कराम्बुजपरिभ्राजत्-कनिष्ठांगुलि-
प्रोद्यद्वल्गुवराटकोपरिमिलन्मुग्धद्विरेफोऽपि यः ।
पाथःक्षेपक-शक्रनक्र-मुखतः क्रोडे व्रजं द्रागपात्
कस्तं गोकुलबान्धवं गिरिवरं गोवर्धनं नाश्रयेत् ? १ ॥

इन्द्रत्वे निभृतं गवां सुरनदीतोयेन दीनात्मना
शक्रेणानुगता चकार सुरभिर्येनाभिषेकं हरेः ।
यत्कच्छेऽजनि तेन नन्दितजनं गोविन्दकुण्डं कृती
कस्तं गोनिकरेन्द्रपट्टशिखरं गोवर्धनं नाश्रयेत् ? २ ॥

स्वर्धुन्यादि-वरेण्यतीर्थगणतो हृद्यान्यजस्रं हरेः
सीरिब्रह्महराप्सरःप्रियकतत् श्रीदानकुण्डान्यपि ।

प्रेमक्षेम–रुचि–प्रदानि परितो भ्राजन्ति यस्य व्रती
कस्तं मान्यमुनीन्द्रवर्णितगुणं गोवर्धनं नाश्रयेत् ? ३ ॥

ज्योत्स्नामोक्षण-माल्यहार-सुमनोगौरी-बलारिध्वजा
गान्धर्वादिसरांसि निर्झरगिरिः शृंगारसिंहासनम् ।
गोपालोऽपि हरिस्थलं हरिरपि स्फूर्जन्ति यत्सर्वतः
कस्तं गो-मृग-पक्षि-वृक्ष-ललितं गोवर्धनं नाश्रयेत् ? ४ ॥

गंगाकोट्यधिकं बकारिपदजारिष्टारिकुण्डं वहन्
भक्त्या यः शिरसा नतेन सततं प्रेयान् शिवादप्यभूत् ।
राधाकुण्डमणिं तथैव मुरजित्–प्रौढप्रसादं दधत्
प्रेयःस्तव्यतमोऽभवत् क इह तं गोवर्धनं नाश्रयेत् ? ५ ॥

यस्यां माधवनाविको रसवतीमाधाय राधां तरौ
मध्ये चंचलकेलिपात–वलनात्त्रासैः स्तुवत्यास्ततः ।
स्वाभीष्टं पणमादधे वहति सा यस्मिन्मनोजाह्नवी
कस्तं तन्नवदम्पती–प्रतिभुवं गोवर्धनं नाश्रयेत् ? ६ ॥

रासे श्रीशतवन्द्य-सुन्दर-सखी-वृन्दाञ्चिता सौरभ-
भ्राजत्-कृष्णरसाल-बाहुविलसत्-कण्ठी मधौ माधवी ।
राधा नृत्यति यत्र चारु वलते रासस्थली सा परा
यस्मिन् कः सुकृती तमुन्नतमये गोवर्धनं नाश्रयेत् ? ७ ॥

यत्र स्वीयगणस्य विक्रमभृता वाचा मुहुः फुल्लतोः
स्मेर-क्रूर-दृगन्त-विभ्रम-शरैः शश्वन्मिथो विद्धयोः ।
तद्यूनोर्नवदानसृष्टिजकलिर्भङ्ग्या हसन् जृंभते
कस्तं तत्पृथुकेलिसूचनशिलं गोवर्धनं नाश्रयेत् ? ८ ॥

श्रीदामादि–वयस्यसञ्चयवृतः संकर्षणेनोल्लसन्
यस्मिन् गोचय-चारु-चारणपरो रीरीति गायत्यसौ ।

रंगे गूढगुहासु च प्रथयति स्मारक्रियां राधया
　कस्तं सौभगभूषिताङ्किततनुं गोवर्धनं नाश्रयेत् ? ९ ॥

कालिन्दीं तपनोद्भवां गिरिगणानत्युन्नमच्छेखरान्
　श्रीवृन्दाविपिनं जनेप्सितधरं नन्दीश्वरं चाश्रयम् ।
हित्वा यं प्रतिपूजयन् व्रजकृते मानं मुकुन्दो ददौ–
　कस्तं शृंगिकिरीटिनं गिरिनृपं गोवर्धनं नाश्रयेत् ? १०॥

तस्मिन् वासदमस्य रम्यदशकं गोवर्धनस्येह यत्
　प्रादुर्भूतमिदं यदीयकृपया जीर्णान्धवक्त्रादपि ।
तस्योद्यद्गुणवृन्द–बन्धुर–खनेर्जीवातुरूपस्य त–
　त्तोषायापि अलं भवत्विति फलं पक्वं मया मृग्यते ॥११॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित–स्तवावल्यां
श्रीगोवर्धनाश्रयदशकं संपूर्णम् ।

# श्रीयमुनाष्टकम् (१) ।

भ्रातुरन्तकस्य पत्तनेऽभिपत्तिहारिणी
　प्रेक्षयातिपापिनोऽपि पापसिन्धुतारिणी ।
नीरमाधुरीभिरप्यशेषचित्तबन्धिनी
　मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ १ ॥

हारिवारिधारयाभिमण्डितोरुखाण्डवा
　पुण्डरीकमण्डलोद्यदण्डजालिताण्डवा ।
स्नानकामपामरोग्रपापसंपदन्धिनी
　मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ २ ॥

शीकराभिमृष्टजन्तु–दुर्विपाकमर्दिनी
नन्दनन्दनान्तरंगभक्तिपूरवर्धिनी ।
तीरसंगमाभिलाषिमंगलानुबन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ३ ॥

द्वीपचक्रबालजुष्टसप्तसिन्धुभेदिनी
श्रीमुकुन्दनिर्मितोरुदिव्यकेलिवेदिनी ।
कान्तिकन्दलीभिरिन्द्रनीलवृन्दनिन्दिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ४ ॥

माथुरेण मण्डलेन चारुणाभिमण्डिता
प्रेमनद्धवैष्णवाध्ववर्धनाय पण्डिता ।
ऊर्मिदोर्विलासपद्मनाभपादवन्दिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ५ ॥

रम्यतीररंभमाणगोकदम्बभूषिता
दिव्यगन्धभाक्कदम्बपुष्पराजिरूषिता ।
नन्दसूनुभक्तसंघसंगमाभिनन्दिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ६ ॥

फुल्लपक्षमल्लिकाक्षहंसलक्षकूजिता
भक्तिविद्धदेवसिद्धकिन्नरालिपूजिता ।
तीरगन्धवाहगन्धजन्मबन्धरन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ७ ॥

चिद्विलासवारिपूरभूर्भुवःस्वरापिनी
कीर्तितापि दुर्मदोरुपापमर्मतापिनी ।
बल्लवेन्द्रनन्दनांगरागभंगगन्धिनी
मां पुनातु सर्वदारविन्दबन्धुनन्दिनी ॥ ८ ॥

तुष्टबुद्धिरष्टकेन निर्मलोर्मिचेष्टितां
त्वामनेन भानुपुत्रि ! सर्वदेववेष्टिताम् ।
यः स्तवीति वर्धयस्व सर्वपापमोचने
भक्तिपूरमस्य देवि ! पुण्डरीकलोचने ॥ ९ ॥

इति श्रीमद्रूपगोस्वामिविरचित–स्तवमालायां
श्रीयमुनाष्टकं (१) संपूर्णम् ।

# श्रीयमुनाष्टकम् (२) ।

मुरारिकायकालिमाललामवारिधारिणी
तृणीकृतत्रिविष्टपा त्रिलोकशोकहारिणी ।
मनोऽनुकूलकूलकुंजपुंजधूतदुर्मदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ १ ॥

मलापहारिवारिपूरभूरिमण्डितामृता
भृशं प्रपातकप्रपंचनातिपंडिता निशा ।
सुनन्दनन्दनांगसंगरागरंजिताहिता
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ २ ॥

लसत्तरंगसंगधूतभूतजातपातका
नवीनमाधुरीधुरीणभक्तिजातचातका ।
तटान्तवासदासहंससंसृताह्निकामदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ३ ॥

विहाररासखेदभेदधीरतीरमारुता
गता गिरामगोचरे यदीयनीरचारुता ।
प्रवाहसाहचर्यपूतमेदिनीनदीनदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ४ ॥

तरंगसंगसैकतांतरांतितं सदासिता
शरन्निशाकरांशुमंजुमंजरी सभाजिता ।
भवार्चनाप्रचारुणांबुनाधुनानिशारदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ५ ॥

जलांतकेलिकारिचारुराधिकांगरागिणी
स्वभर्तुरन्यदुर्लभांगतांगतांशभागिनी ।
स्वदत्तसुप्तसप्तसिन्धुभेदिनातिकोविदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ६ ॥

जलच्युताच्युतांगरागलंपटालिशालिनी
विलोलराधिकाकचांतचंपकालिमालिनी ।
सदावगाहनावतीर्णभर्तृभृत्यनारदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ७ ॥

सदैव नन्दनन्दकेलिशालिकुंजमंजुला
तटोत्थफुल्लमल्लिकाकदंबरेणुसूज्ज्वला ।
जलावगाहिनां नृणां भवाब्धिसिन्धुपारदा
धुनोतु मे मनोमलं कलिन्दनन्दिनी सदा ॥ ८ ॥

इति श्रीयमुनाष्टकं (२) संपूर्णम् ।

## श्रीयमुनाष्टकम् (३) ।

कृपापारावारां तपनतनयां तापशमनीं
मुरारिप्रेयस्यां भवभयदवां भक्तिवरदाम् ।
वियज्ज्वालान्मुक्तां श्रियमपि सुखाप्तेः परिदिनं
सदा धीरो नूनं भजति यमुनां नित्यफलदाम् ॥ १ ॥

मधुवनचारिणि भास्करवाहिनि जाह्नविसंगिनि सिन्धुसुते
मधुरिपुभूषिणि माधवतोषिणि गोकुलभीतिविनाशकृते ।
जगदघमोचनि मानसदायिनि केशवकेलिनिदानगते
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥२॥

अयि मधुरे मधुमोदविलासिनि शैलविदारिणि वेगभरे
परिजनपालिनि दुष्टनिषूदिनि वांछितकामविलासधरे ।
व्रजपुरवासिजनार्जितपातकहारिणि विश्वजनोद्धरिके
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥३॥

अतिविपदम्बुधिमग्नजनं भवतापशताकुलमानसकं
गतिमतिहीनमशेषभयाकुलमागतपादसरोजयुगम् ।
ऋणभयभीतिमनिष्कृतिपातककोटिशतायुतपुंजतरं
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥४॥

नवजलदद्युतिकोटिलसत्तनुहेममयाभररंजितके
तडिदवहेलिपदांचलचंचलशोभितपीतसुचैलधरे ।
मणिमयभूषणचित्रपटासनरंजितगंजितभानुकरे
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥५॥

शुभपुलिने मधुमत्तयदूद्भवरासमहोत्सवकेलिभरे
उच्चकुलाचलराजितमौक्तिकहारमयाभररोदसिके ।
नवमणिकोटिकभास्करकंचुकिशोभिततारकहारयुते
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥६॥

करिवरमौक्तिकनासिकभूषणवातचमत्कृतचंचलके
मुखकमलामलसौरभचंचलमत्तमधुव्रतलोचनिके ।
मणिगणकुण्डललोलपरिस्फुरदाकुलगण्डयुगामलके
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥७॥

कलरवनूपुरहेममयाचितपादसरोरुहसारुणिके
धिमिधिमिधिमिधिमिधिमितालविनोदितमानसमंजुलपादगते ।
तव पदपंकजमाश्रितमानवचित्तसदाखिलतापहरे
जय यमुने जय भीतिनिवारिणि संकटनाशिनि पावय माम् ॥८॥

इति श्रीयमुनाष्टकं (३) संपूर्णम् ।

## श्रीयमुनाष्टकम् (४) ।

मदकलकलकलविंककुलाकुलकोककुतूहलनीरे
तरुणतमालविशालरसालपलाशविलाससुतीरे ।
तरलतुषारतरंगविहारविलोलितनीरजनाले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ १ ॥

ललितकदंबकदंबनितंबमयूरमनोहरनादे
निजजलसंगितशीतलमारुतसेवितपादपपादे ।
विकसितसितशतपत्रलसद्भ्रमनांचितमत्तमराले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ २ ॥

राधारमणचरणशरणागतिजीवनजीवनवाहे
बहुतर संचितपापविदारणदूरीकृतभवदाहे ।
विधिविस्मापकदुर्जनतापकनिजतेजोजितकाले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ ३ ॥

अमरनिकरवरवागभिनन्दितहरिजलकेलिविलासे
निजतटवासिमनोरथपूरणकृतसुरतरुपरिहासे ।
स्नानविमर्दितहरिपदकुंकुमपंककलंकितभाले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ ४ ॥

अमल कमलकुलदलचलमधुकरनिनदप्रतिध्वनिशोभे
स्वसलिलशीकरसेवकनरवरसमुदितहरिपदलोभे ।
स्वांगस्पर्शसुखीकृतवायुसमुद्धतजनपदजाले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ ५ ॥

मणिगणमौक्तिकमंजुलमालनिबद्धतटद्वयभासे
प्रकरनिकरतनुधारिसुरेश्वरमण्डलरचितनिवासे ।
विपुलविशदमृदुतलपुलिनावलिकमनगमनबकमाले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ ६ ॥

अगणितगुणगणसाधनसमुदयदुर्लभभक्तितडागे
सानन्दाऽत्यवगाहनदायिनि माधवसमतनुरागे ।
रसनिधिसुखविधिकारणकेशवपादविमुखविकराले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ ७ ॥

व्रजनवयुवतिविहारविधायककुंजपुंजकृतसेवे
निजसुषमानिचयेन वशीकृतगोकुलजीवनदेवे ।
कृष्णचन्द्रकरुणारसवाहिनिवृन्दावनवनमाले
मम दुरितं त्वरितं हि विनाशय नलिनानन्दकबाले ॥ ८ ॥

सार्थकसुन्दरपदयमकाऽञ्चितकरणकुतूहलकारं
पद्याष्टकमिदमर्कसुतामहिमामृतवर्णनभारम् ।
कविवर"नन्दकिशोर"कृतं शुभभक्तियुतो नरजातिः
कोऽपि पठेद्यदि गोष्ठपुरन्दरभक्तगणेषु विभाति ॥ ९ ॥

इति श्रीनन्दकिशोरगोस्वामिविरचितं
श्रीयमुनाष्टकं (४) संपूर्णम् ।

# श्रीयमुनाष्टकम् (५) ।

त्वयि स्नाता ध्याता तव सलिलपाता नमयिता
स्तुतेः कर्ता धर्ता तव रजसि मर्ता रविसुते ।
न चैवाऽऽख्यां वक्ता शमनसदने याति यमुने
नमामस्त्वां नित्यां सकलगुणयुक्तां रविसुताम् ॥ १ ॥

मुरारातेः कायप्रतिमललितं वारि दधतीं
कलिन्दाद्रेः शृङ्गादपि पतनशीलां गतिमतीम् ।
स्वपादाब्जं ध्यातुर्जनिमरणशोकं वितुदतीं
नमामस्त्वां नित्यां सकलगुणयुक्तां रविसुताम् ॥ २ ॥

कदंबानां पुष्पावलिभिरनिशं रूषितजलां
विधीन्द्राद्यैर्देवैर्मुनिजनकुलैः पूजितपदाम् ।
भ्रमद्गोगोधुग्भिर्विहगनिकरैर्भूषिततटां
नमामस्त्वां नित्यां सकलगुणयुक्तां रविसुताम् ॥ ३ ॥

रणद्भृङ्गश्रेणीविकसितसरोजावलियुतां
तरङ्गान्तर्भ्राम्यन्मकरसफरीकच्छपकुलाम् ।
जलक्रीडद्रामानुजचरणसंश्लेषरसिकां
नमामस्त्वां नित्यां सकलगुणयुक्तां रविसुताम् ॥ ४ ॥

तरुश्रेणीकुञ्जावलिभिरभितः शोभिततटां
महोक्षाणां शृङ्गावलिभिरभितो मर्दिततटाम् ।
स्थितां वृन्दाटव्यां सततमभितः पुष्पितवनां
नमामस्त्वां नित्यां सकलगुणयुक्तां रविसुताम् ॥ ५ ॥

निशायां यस्यां बिंबितममलतारागणमहो
विलोक्योत्कण्ठन्ते सकलसफरा अत्तुमनिशम् ।

विकीर्णं लाजानां निकरमिति मत्वा सरभसं
नमामस्तां नित्यां सकलगुणयुक्तां रविसुताम् ॥ ६ ॥

शरन्मेघच्छाया सकलमनुजैर्यत्सलिलगा
हरेः स्वस्यामाप्तुं स्नपनमिति बुद्धया सरभसम् ।
किमायाता गर्भे सुरसरिदहो तर्क्यत इति
नमामस्तां नित्यां सकलगुणयुक्तां रविसुताम् ॥ ७ ॥

नृणामीक्षामात्रादपि सकलसौख्यं विदधतीं
अनायासेनैवाऽखिलभुवनभोग्यं प्रददतीम् ।
स्वकान्तीनां व्यूहैर्बलभिदुपलं चापि तुदतीं
नमामस्त्वां नित्यां सकलगुणयुक्तां रविसुताम् ॥ ८ ॥

ममैषा विज्ञप्तिः पदकमलयोस्ते तरणिजे
वटे हा भाण्डीरे तव विमलतीरे निवसतः ।
हरे कृष्णेत्युच्चैरपि च तव नामानि गदतः
सदा वृन्दारण्ये जननि जननं यातु मम वै ॥ ९ ॥

किमायाता कालः स इह जनने मे हतविधे-
र्यदाऽऽयातः कृष्णो मधुमधुरवाङ्निर्झरजलैः ।
श्रुतेर्मार्गं सिञ्चन् करकमलयुग्मेन सहसा
मदङ्गं स्वाङ्गे हा व्रततिमिव वृक्षो गमयिता ॥१०॥

इदं स्तोत्रं प्रातः पठति यमुनायाः प्रतिदिनं
शरीरी यस्तस्योपरि भवति प्रीता रविसुता ।
हरेः प्रेष्ठो भूत्वा हरिचरणभक्तिं च लभते
भुवो भोगान् भुक्त्वा व्रजति मरणान्ते हरिपदम् ॥११॥

इति श्रीवनमालिदासशास्त्रिविरचितं
श्रीयमुनाष्टकं (५) संपूर्णम् ।

# श्रीयमुनाष्टकम् (६) ।

सकान्तमाधवाङ्गरागरक्तवारिधारिणीं
सुगन्धवृन्दगन्धितां तदङ्गमाल्यमण्डिताम् ।
सदाभितोवनं महत्प्रशोभिताम्बुवाहिका-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ १ ॥

व्रजेन्द्रनन्दनस्य वेणुमाधुरीश्रुतीश्रुतात्
प्रहर्षविह्वलात्मनातिनिश्चलाम्बुतांगताम् ।
तटान्तकुञ्जकेकिकीरकोकिलादिसंकुला-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ २ ॥

प्रसन्नचित्तहंसचक्रवाकपक्षिकूजितां
तदुक्तनादनन्दितां वनप्रसूनचर्चिताम् ।
जलस्थमंजुकञ्जपुञ्जसंनदन्मधुव्रता-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ ३ ॥

प्रफुल्लमल्लिकादिजातिमाधवीमधुश्रितां
सशैत्यगन्धमन्दवायुमोददामलं सताम् ।
सदा हरेः प्रसादलाभतः सदूर्मिशोभिता-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ ४ ॥

सुरासमण्डलप्रभाप्रसस्तदर्पणाम्बुभां
जलेसुकेलिदापिकादिकौतुकातिवल्गिताम् ।
सदैव मज्जतां सतां प्रभूतसौख्यदायका-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ ५ ॥

हरेरूपासिकां पुनः शुभातितांबुभश्रितां
सदादरं शिवेन्द्रब्रह्मनारदादि संस्तुताम् ।
जलेस्त्वचिन्त्य चिन्तनाति-हृष्ट-चित्तचिन्तिता-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ ६ ॥

हरेर्मुखस्य माधुरीप्रपानमत्तमानसां
नवीननीरदाद्भुताङ्गदर्शनातिलालसाम् ।
तरङ्गसङ्गतैर्दलैः पदारविन्दपूजका-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ ७ ॥

जलाब्जगन्धसंपदां सनातनातिसेवितां
सदा समीप केशवस्य दास्यभावभाविताम् ।
अनन्यभक्तलोचनप्रमोदनृत्यकारिका-
महं कलिन्दकन्यकां शुभां भजे महाद्भुताम् ॥ ८ ॥

स्तुवन्त इत्थमीदृशीं कलिन्दजां महाद्भुतां
निमज्य नन्दनन्दनं जपन्ति ये च सप्रियम् ।
बहुप्रसन्नचेतसो नमन्ति नीरजाननं
महाद्भुतप्रियं वनं व्रजन्ति वै हरेः पदम् ॥ ९ ॥

पूर्णश्यामाङ्गभासंलसन्ती स्फुरत्
कृत्स्नदत्ताङ्गरुच्यातिसंरोचसे ।
देवि नूनं–जनाः पूतपूता भव–
न्तीति हे सूर्यकन्ये भवद्दर्शनात् ॥ १० ॥

इति श्रीअनन्यदेवविरचितं श्रीयमुनाष्टकं (६) संपूर्णम् ।

# श्रीगङ्गास्तोत्रम् ।

देवि ! सुरेश्वरि ! भगवति ! गङ्गे !
त्रिभुवनतारिणि ! तरलतरङ्गे ।
शंकरमौलिनिवासिनि ! विमले !
मम मतिरास्तां तव पदकमले ॥ १ ॥

भागीरथि ! सुखदायिनि ! मात-
स्तव जलमहिमा निगमे ख्यातः ।
नाहं जाने तव महिमानं
त्राहि कृपामयि ! मामज्ञानम् ॥ २ ॥

हरिपादपद्मविहारिणि ! गङ्गे !
हिमविधुमुक्ताधवलतरङ्गे ।
दूरीकुरु मम दुष्कृतिभारं
कुरु कृपया भवसागरपारम् ॥ ३ ॥

तव जलममलं येन निपीतं
परमपदं खलु तेन गृहीतम् ।
मातर्गङ्गे ! त्वयि यो भक्तः
किल तं द्रष्टुं न यमः शक्तः ॥ ४ ॥

पतितोद्धारिणि ! जाह्नवि ! गङ्गे !
खण्डितगिरिवरमण्डितभङ्गे ।
भीष्मजननि ! खलु मुनिवरकन्ये !
पतितोद्धारिणि ! त्रिभुवनधन्ये ॥ ५ ॥

कल्पलतामिव फलदां लोके
　　प्रणमति यस्त्वां न पतति शोके ।
पारावारविहारिणि ! गङ्गे !
　　विमुखवनिताकृततरलापाङ्गे ॥ ६ ॥

तव कृपया चेत् स्रोतःस्नातः
　　पुनरपि जठरे सोऽपि न जातः ।
नरकनिवारिणि ! जाह्नवि ! गङ्गे !
　　कलुषविनाशिनि ! महिमोत्तुङ्गे ॥ ७ ॥

परिसरदङ्गे ! पुण्यतरङ्गे !
　　जय जय जाह्नवि ! करुणापाङ्गे ।
इन्द्रमुकुटमणिराजितचरणे !
　　सुखदे ! शुभदे ! सेवकशरणे ॥ ८ ॥

रोगं शोकं तापं पापं
　　हर मे भगवति ! कुमतिकलापम् ।
त्रिभुवनसारे ! वसुधाहारे !
　　त्वमसि गतिर्मम खलु संसारे ॥ ९ ॥

अलकानन्दे ! परमानन्दे !
　　कुरु मयि करुणां कातरवन्द्ये ।
तव तटनिकटे यस्य निवासः
　　खलु वैकुण्ठे तस्य निवासः ॥१०॥

वरमिह नीरे कमठो मीनः
　　किंवा तीरे शरटः क्षीणः ।
अथवा गव्यूतिश्वपचो दीन-
　　स्तव न हि दूरे नृपतिः कुलीनः॥११॥

भो भुवनेश्वरि ! पुण्ये ! धन्ये !
देवि ! द्रवमयि ! मुनिवरकन्ये ।
गङ्गास्तवमिमममलं नित्यं
पठति नरो यः स जयति सत्यम् ॥१२॥

येषां हृदये गङ्गाभक्ति-
स्तेषां भवति सदा सुखमुक्तिः ।
मधुरमनोहरपज्झटिकाभिः
परमानन्दकलितललिताभिः ॥१३॥

गङ्गास्तोत्रमिदं भवसारं
वाञ्छितफलदं विगलितभारम् ।
शंकरसेवकशंकररचितं
पठति च विनयीदमिति समाप्तम् ॥१४॥

इति श्रीगङ्गास्तोत्रं संपूर्णम् ।

## श्रीगङ्गास्तवः ।

गङ्गे समस्तजगदंब चलत्तरङ्गे-
ऽनङ्गारिचारुतरमस्तकपुष्पमाले ।
कंसारिचारुचरणद्वयरेणुहर्त्रि
भक्त्या नमामि दुरितक्षयकारिणि त्वाम् ॥ १ ॥

मातः समस्तसुखदे प्रवरे नदीनां
व्यासादिविप्रचयगीतगुणे गुणाढ्ये ।
संसारभैरवमहार्णवमध्यनौके
वन्दे तवांघ्रियुगलं दुरितापहारि ॥ २ ॥

यस्यास्तवांबुकणिकामपि जह्नुकन्ये
सौदासनामनृपतिर्द्विजकोटिहन्ता ।
संप्राप्य मुक्तिमगमत्त्रिदशैरलभ्यां
तां त्वां नमामि शिरसा वरदे प्रसीद ॥ ३ ॥

नारायणाच्युतजनार्दनकृष्णराम-
गङ्गादिनाम वदतो मम देवि मातः ।
संसारपातकनिवारिणि देहपात-
स्त्वद्वारिणीह भवतु त्वदनुग्रहेण ॥ ४ ॥

किंवा तपोभिरखिलेश्वरि किं जपैर्वा
दानैश्च किं तुरगमेधमुखैर्मखैर्वा ।
त्वन्नीरशीकरमवाप्य सुरैरलभ्यां
मुक्तिं व्रजन्ति मनुजा अपि पापिनोऽपि ॥ ५ ॥

स्वाहा त्वमेव परमेश्वरि या स्वधा त्वं
गीर्वाणवृन्दपितृलोकसुतृप्तिहेतुः ।
सत्त्वं रजस्तम इति त्रिगुणस्वरूपा
सृष्टिस्थितिप्रलयकारिणि नौमि तां त्वाम् ॥६॥

धत्ते ललाटफलके तव सैकतं यः
पुण्ड्रं च देवि तव तीरमृदा सदैव ।
त्वन्नाम सर्वरसधाम वदेच्च भक्त्या
तत्पादरेणुरखिलोऽस्तु ममैव मूर्ध्नि ॥ ७ ॥

त्वद्रोधसि त्रिपथगे वसतिं विधाय
पीत्वा च वारि तव पातकनाशकारि ।
स्मृत्वा च नाम तव वीचिचयं च दृष्ट्वा
संसारबन्धनहरे मम यातु जन्म ॥ ८ ॥

नाकं शुभे सुमहदुच्चतरं मनुष्याः
कुर्वन्ति भीतिमतिदुर्गममम्ब मत्वा ।
व्यर्थैव सा किल यतोऽमृतदे त्वदीयं
सोपानभूतमुदकं त्रिदिवप्रयाणे ॥ ९ ॥

पापानि रोगनिकराश्च शरीरिदेहे
तिष्ठन्ति तावदखिलेश्वरि मुक्तिदात्रि ।
कुर्वन्ति यावदुदकेषु तवामलेषु
स्नानं न हि त्रिपथगे सरितां प्रधाने ॥१०॥

यस्यास्तवाच्युतविरिञ्चिशिवादयोऽपि
शक्ता न देवनिकरा व्रजितुं महिम्नाम् ।
पारं परे परममोक्षपदप्रदात्रि
तां त्वां वदन्ति तटिनीमिव केऽपि मोहात् ॥११॥

गङ्गे समस्तसुखदायिनि किञ्चिदेव
जानाति ते पशुपतिर्भगवान् महत्त्वम् ।
यस्मादसौ सुमनसां प्रवरोऽपि भक्त्या
धत्ते सदा स्वशिरसा जगदीश्वरि त्वाम् ॥१२॥

गङ्गे देवि जगन्मातः प्रसीद परमेश्वरि ।
परित्राहि नमस्तुभ्यं रक्ष मां सेवकं स्वकम् ॥१३॥

परब्रह्मस्वरूपां त्वां सर्वलोकैकमातरम् ।
शक्नोमि किमहं स्तोतुं भ्रान्तचित्तोऽत्र मोक्षदे ॥१४॥

इति पद्मपुराणान्तर्गतः श्रीगङ्गास्तवः संपूर्णः ।

# श्रीतुलसीस्तोत्रम् ।

जगद्धात्रि नमस्तुभ्यं विष्णोश्च प्रियवल्लभे ।
यतो ब्रह्मादयो देवाः सृष्टिस्थित्यन्तकारिणः ॥ १ ॥

नमस्तुलसि कल्याणि नमो विष्णुप्रिये शुभे ।
नमो मोक्षप्रदे देवि नमः संपत्प्रदायिके ॥ २ ॥

तुलसी पातु मां नित्यं सर्वापद्भ्योऽपि सर्वदा ।
कीर्तितापि स्मृता वापि पवित्रयति मानवम् ॥ ३ ॥

नमामि शिरसा देवीं तुलसीं विलसत्तनुम् ।
यां दृष्ट्वा पापिनो मर्त्या मुच्यन्ते सर्वकिल्बिषात् ॥ ४ ॥

तुलस्या रक्षितं सर्वं जगदेतच्चराचरम् ।
या विनिर्हन्ति पापानि दृष्टा वै पापिभिर्नरैः ॥ ५ ॥

नमस्तुलस्यतितरां तस्यै बद्धाञ्जलिं कलौ ।
कलयन्ति सुखं सर्वे स्त्रियो वैश्यास्तथापरे ॥ ६ ॥

तुलस्या नापरं किञ्चिद्दैवतं जगतीतले ।
यया पवित्रितो लोको विष्णुसंगेन वैष्णवः ॥ ७ ॥

तुलस्याः पल्लवं विष्णोः शिरस्यारोपितं कलौ ।
आरोपयति सर्वाणि श्रेयांसि वरमस्तके ॥ ८ ॥

तुलस्यां सकला देवा वसन्ति सततं यतः ।
अतस्तामर्चयेल्लोके सर्वान् देवान् समर्चयन् ॥ ९ ॥

नमस्तुलसि सर्वज्ञे पुरुषोत्तमवल्लभे ।
पाहि मां सर्वपापेभ्यः सर्वसंपत्प्रदायिके ॥ १० ॥

इति स्तोत्रं पुरा गीतं पुण्डरीकेण धीमता ।
विष्णुमर्चयता नित्यं शोभनैस्तुलसीदलैः ॥११॥

तुलसी श्रीर्महालक्ष्मीर्विद्याविद्या यशस्विनी ।
धर्म्या धर्मानना वृन्दा देवदेवमनःप्रिया ॥१२॥

लक्ष्मीप्रियसखी देवी द्यौर्भूमिरचला चला ।
षोडशैतानि नामानि तुलस्याः कीर्तयेन्नरः ॥१३॥

लभते सुतरां भक्तिमन्ते विष्णुपदं तथा ।
तुलसी भूमहालक्ष्मीः पद्मिनी श्रीहरिप्रिया ॥१४॥

तुलसि श्रीसखि शुभे पापहारिणि पुण्यदे ।
नमस्ते नारदनुते नारायणमनःप्रिये ॥१५॥

इति श्रीपुण्डरीककृतं श्रीतुलसीस्तोत्रं संपूर्णम् ।

# श्रीतुलसीस्तवः ।

मुनयः सिद्धगन्धर्वाः पाताले नागराट् स्वयम् ।
प्रभावं तव देवेशि गायन्ति सुरसत्तमाः ॥ १ ॥

न ते प्रभावं जानन्ति देवताः केशवादृते ।
गुणानां परिमाणन्तु कल्पकोटिशतैरपि ॥ २ ॥

कृष्णानन्दात् समुद्भूता क्षीरोदमथनोद्यमे ।
उत्तमाङ्गे पुरा येन तुलसी विष्णुना धृता ॥ ३ ॥

प्राप्यैतानि त्वया देवि विष्णोरङ्गानि सर्वशः ।
पवित्रता त्वया प्राप्ता तुलसीं त्वां नमाम्यहम् ॥ ४ ॥

त्वदङ्गसंभवैः पत्रैः पूजयामि यथा हरिम् ।
तथा कुरुष्व मेऽविघ्नं यतो यामि परां गतिम् ॥ ५ ॥

रोपिता गोमतीतीरे स्वयं कृष्णेन पालिता ।
जगद्धिताय तुलसी गोपीनां हितहेतवे ॥ ६ ॥

वृन्दावने विचरता सेविता विष्णुना स्वयम् ।
गोकुलस्य विवृद्धयर्थं कंसस्य निधनाय च ॥ ७ ॥

वशिष्ठवचनात् पूर्वं रामेण सरयूतटे ।
राक्षसानां वधार्थाय रोपिता त्वं जगत्प्रिये ।
रोपिता तपसो वृद्धयै तुलसीं त्वां नमाम्यहम् ॥ ८ ॥

वियोगे राघवेन्द्रस्य ध्यात्वा त्वां जनकात्मजा ।
अशोकवनमध्ये तु प्रियेण सह संगता ॥ ९ ॥

शंकरार्थं पुरा देवि पार्वत्या त्वं हिमालये ।
रोपिता सेविता सिद्धयै तुलसीं त्वां नमाम्यहम् ॥१०॥

धर्मारण्ये गयायां च सेविता पितृभिः स्वयम् ।
सेविता तुलसी पुण्या आत्मनो हितमिच्छता ॥११॥

रोपिता रामचन्द्रेण सेविता लक्ष्मणेन च ।
सीतया पालिता भक्त्या तुलसी दण्डके वने ॥१२॥

त्रैलोक्यव्यापिनी गङ्गा यथा शास्त्रेषु गीयते ।
तथैव तुलसी देवी दृश्यते सचराचरे ॥१३॥

ऋष्यमूके च वसता कपिराजेन सेविता ।
तुलसी बालिनाशाय तारासंगमहेतवे ॥१४॥

प्रणम्य तुलसीदेवीं सागरोत्क्रमणं कृतम् ।
कृतकार्यः प्रहृष्टश्च हनूमान् पुनरागतः ॥१५॥

तुलसीग्रहणं कृत्वा विमुक्तो याति पातकैः ।
अथवा मुनिशार्दूला ब्रह्महत्यां व्यपोहति ॥१६॥

तुलसीपत्रगलितं यस्तोयं शिरसा वहेत् ।
गङ्गास्नानमवाप्नोति दशधेनुफलप्रदम् ॥१७॥

प्रसीद देवि देवेशि प्रसीद हरिवल्लभे ।
क्षीरोदमथनोद्भूते तुलसी त्वां नमाम्यहम् ॥१८॥

द्वादश्यां जागरे रात्रौ यः पठेत्तुलसीस्तवम् ।
द्वात्रिंशदपराधांश्च क्षमते तस्य केशवः ॥१९॥

इति पद्मपुराणे सृष्टिखण्डे श्रीतुलसीस्तवः संपूर्णः ।

# श्रीमथुरास्तवः ।

मुक्तेर्गोविन्दभक्तेर्वितरणचतुरं सच्चिदानन्दरूपं
यस्यां विद्योति विद्यायुगलमुदयते तारकं पारकं च ।
कृष्णस्योत्पत्तिलीलाखनिरखिलजगन्मौलिरत्नस्य सा ते
वैकुण्ठोरुप्रतिष्ठा प्रथयतु मथुरा मंगलानां कलापम् ॥ १ ॥

कोटीन्दुस्पष्टकान्ती रभसयुतभवक्लेशयोधैरयोध्या
मायावित्रासिवासा मुनिहृदयमुषो दिव्यलीलाः स्रवन्ती ।
साशीः काशीशमुख्यामरपतिभिरलं प्रार्थितद्वारकार्या
वैकुण्ठोद्गीतकीर्तिर्दिशतु मधुपुरी प्रेमभक्तिश्रियं वः ॥२॥

बीजं मुक्तितरोरनर्थपटलीनिस्तारकं तारकं
धाम प्रेमरसस्य वाञ्छितधुरासंपारकं पारकम् ।
एतद्यत्र निवासिनामुदयते चिच्छक्तिवृत्तिद्वयं
मथ्नातु व्यसनानि माथुरपुरी सा वः श्रियं च क्रियात् ॥३॥

अद्यावन्ति ! पतद्ग्रहं कुरु करे माये ! शनैर्वीजय
च्छत्रं काञ्चि ! गृहाण काशि ! पुरतः पादूयुगं धारय ।
नायोध्ये ! भज संभ्रमं स्तुतिकथां नोद्गारय द्वारके !
देवीयं भवतीषु हन्त मथुरा दृष्टिप्रसादं दधे ॥४॥

इति श्रीमद्रूपगोस्वामिविरचित–स्तवमालायां

श्रीमथुरास्तवः संपूर्णः।

# श्रीअनुरागवल्ली ।

देहार्बुदानि भगवन् ! युगपत् प्रयच्छ
वक्त्रार्बुदानि च पुनः प्रतिदेहमेव ।
जिह्वार्बुदानि कृपया प्रतिवक्त्रमेव
नृत्यन्तु तेषु तव नाथ ! गुणार्बुदानि ॥ १ ॥

किमात्मना ? यत्र न देहकोट्यो
देहेन किं ? यत्र न वक्त्रकोट्यः ।
वक्त्रेण किं ? यत्र न कोटिजिह्वाः
किं जिह्वया ? यत्र न नामकोट्यः ॥ २ ॥

आत्मास्तु नित्यं शतदेहवर्ती
देहस्तु नाथास्तु सहस्रवक्त्रः ।

वक्त्रं सदा राजतु लक्षजिह्वं
गृह्णातु जिह्वा तव नामकोटिम् ॥ ३ ॥

यदा यदा माधव ! यत्र यत्र
गायन्ति ये ये तव नामलीलाः ।
तत्रैव कर्णायुत-धार्यमाणा-
स्तास्ते सुधा नित्यमहं धयानि ॥ ४ ॥

कर्णायुतस्यैव भवन्तु लक्ष-
कोटयो रसज्ञा भगवंस्तदैव ।
येनैव लीलाः शृणवानि नित्यं
तेनैव गायानि ततः सुखं मे ॥ ५ ॥

कर्णायुतस्येक्षण-कोटिरस्या
हृत्कोटिरस्या रसनार्बुदं स्तात् ।
श्रुत्वैव दृष्ट्वा तव रूपसिन्धु-
मालिंग्य माधुर्यमहो ! धयानि ॥ ६ ॥

नेत्रार्बुदस्यैव भवन्तु कर्ण-
नासा-रसज्ञा हृदयार्बुदं वा ।
सौन्दर्य-सौस्वर्य-सुगन्धपूर-
माधुर्य-संश्लेष-रसानुभूत्यै ॥ ७ ॥

त्वत्पार्श्वगत्यै पदकोटिरस्तु
सेवां विधातुं मम हस्तकोटिः ।
तां शिक्षितुं स्तादपि बुद्धिकोटि-
रेतान् वरान्मे भगवन् ! प्रयच्छ ॥ ८ ॥

इति श्रीमद्विश्वनाथचक्रवर्तिठक्कुरविरचित-स्तवामृतलहर्यां
श्रीअनुरागवल्ली संपूर्णा ।

# श्रीउपदेशामृतम् ।

वाचो वेगं मनसः क्रोधवेगं
　जिह्वावेगमुदरोपस्थवेगम् ।
एतान् वेगान् यो विषहेत धीरः
　सर्वामपीमां पृथिवीं स शिष्यात् ॥ १ ॥

अत्याहारः प्रयासश्च प्रजल्पो नियमाग्रहः ।
जनसंगश्च लौल्यं च षड्भिर्भक्तिर्विनश्यति ॥ २ ॥

उत्साहान्निश्चयाद्धैर्यात्तत्तत्कर्मप्रवर्तनात् ।
संगत्यागात् सतो वृत्तेः षड्भिर्भक्तिःप्रसिध्यति॥ ३ ॥

ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुंक्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ॥ ४ ॥

कृष्णेति यस्य गिरि तं मनसाद्रियेत
　दीक्षास्ति चेत् प्रणतिभिश्च भजन्तमीशम् ।
शुश्रूषया भजनविज्ञमनन्यमन्य-
　निन्दादिशून्यहृदमीप्सितसंगलब्ध्या ॥ ५ ॥

दृष्टैः स्वभावजनितैर्वपुषश्च दोषै-
　र्न प्राकृतत्वमिह भक्तजनस्य पश्येत् ।
गंगांभसां न खलु बुद्बुदफेनपंकै-
　र्ब्रह्मद्रवत्वमपगच्छति नीरधर्मैः ॥ ६ ॥

स्यात् कृष्ण-नाम-चरितादि-सिताप्यविद्या-
　पित्तोपतप्तरसनस्य न रोचिका नु ।

किन्त्वादरादनुदिनं खलु सैव जुष्टा
स्वाद्वी क्रमाद्भवति तद्गदमूलहन्त्री ॥ ७ ॥

तन्नाम-रूप-चरितादि-सुकीर्तनानु-
स्मृत्योः क्रमेण रसनामनसी नियोज्य ।
तिष्ठन् व्रजे तदनुरागि-जनानुगामी
कालं नयेदखिलमित्युपदेशसारम् ॥ ८ ॥

वैकुण्ठाज्जनितो वरा मधुपुरी तत्रापि रासोत्सवाद्-
वृन्दारण्यमुदारपाणि-रमणात्तत्रापि गोवर्धनः ।
राधाकुण्डमिहापि गोकुलपतेः प्रेमामृताप्लावनात्
कुर्यादस्य विराजतो गिरितटे सेवां विवेकी न कः ? ९ ॥

कर्मिभ्यः परितो हरेः प्रियतया व्यक्तिं ययुर्ज्ञानिन-
स्तेभ्यो ज्ञानविमुक्त-भक्तिपरमाः प्रेमैकनिष्ठास्ततः ।
तेभ्यस्ताः पशुपालपंकजदृशस्ताभ्योऽपि सा राधिका
प्रेष्ठा तद्वदियं तदीय-सरसी तां नाश्रयेत् कः कृती ?१०॥

कृष्णस्योच्चैः प्रणयवसतिः प्रेयसीभ्योऽपि राधा
कुण्डं चास्या मुनिभिरभितस्तादृगेव व्यधायि ।
यत् प्रेष्ठैरप्यलमसुलभं किं पुनर्भक्तिभाजां
तत् प्रेमेदं सकृदपि सरः स्नातुराविष्करोति ॥११॥

इति श्रीमद्रूपगोस्वामिविरचितं
श्रीउपदेशामृतं संपूर्णम् ।

# श्रीमनःशिक्षा ।

गुरौ गोष्ठे गोष्ठालयिषु सुजने भूसुरगणे
स्वमंत्रे श्रीनाम्नि व्रजनवयुवद्वन्द्वशरणे ।
सदा दंभं हित्वा कुरु रतिमपूर्वामतितरा-
मये स्वान्तर्भ्रातश्चटुभिरभियाचे धृतपदः ॥ १ ॥

न धर्मं नाधर्मं श्रुतिगणनिरुक्तं किल कुरु
व्रजे राधाकृष्ण-प्रचुरपरिचर्यामिह तनु ।
शचीसूनुं नन्दीश्वरपतिसुतत्वे गुरुवरं
मुकुन्दप्रेष्ठत्वे स्मर परमजस्रं ननु मनः ॥ २ ॥

यदीच्छेरावासं व्रजभुवि सरागं प्रतिजनु-
र्युवद्वन्द्वं तच्चेत् परिचरितुमारादभिलषेः ।
स्वरूपं श्रीरूपं सगणमिह तस्याग्रजमपि
स्फुटं प्रेम्णा नित्यं स्मर नम तदा त्वं शृणु मनः ॥३॥

असद्वार्तावेश्या विसृज मतिसर्वस्वहरणीः
कथा मुक्ति-व्याघ्र्या न शृणु किल सर्वात्मगिलनीः ।
अपि त्यक्त्वा लक्ष्मीपतिरतिमितो व्योमनयनीं
व्रजे राधाकृष्णौ स्वरतिमणिदौ त्वं भज मनः ॥ ४ ॥

असच्चेष्टा-कष्टप्रदविकट-पाशालिभिरिह
प्रकामं कामादि-प्रकट-पथपातिव्यतिकरैः ।
गले बद्ध्वा हन्येऽहमिति बकभिद्वर्त्मपगणे
कुरु त्वं फुत्कारानवति स यथा त्वां मन इतः ॥ ५ ॥

अरे चेतः प्रोद्यत्कपटकुटिनाटीभर-खर-
क्षरन्मूत्रे स्नात्वा दहसि कथमात्मानमपि माम् ।
सदा त्वं गान्धर्वा-गिरिधरपदप्रेमविलसत्-
सुधांभोधौ स्नात्वा स्वमपि नितरां मां च सुखय॥ ६ ॥

प्रतिष्ठाशा धृष्टा श्वपचरमणी मे हृदि नटेत्
कथं साधु-प्रेमा स्पृशति शुचिरेतन्ननु मनः ।
सदा त्वं सेवस्व प्रभुदयित-सामन्तमतुलं
यथा तां निष्काश्य त्वरितमिह तं वेशयति सः ॥ ७ ॥

यथा दुष्टत्वं मे दवयति शठस्यापि कृपया
यथा मह्यं प्रेमामृतमपि ददात्युज्ज्वलमसौ ।
यथा श्रीगान्धर्वा-भजन-विधये प्रेरयति मां
तथा गोष्ठे काक्वा गिरिधरमिह त्वं भज मनः ॥ ८ ॥

मदीशानाथत्वे व्रजविपिनचन्द्रं व्रजवने-
श्वरीं तन्नाथत्वे तदतुल-सखीत्वे तु ललिताम् ।
विशाखां शिक्षाली-वितरण-गुरुत्वे प्रियसरो-
गिरिन्द्रौ तत्प्रेक्षा-ललित-रतिदत्वे स्मर मनः ॥ ९ ॥

रतिं गौरी-लीले अपि तपति सौन्दर्यकिरणैः
शची-लक्ष्मी-सत्याः परिभवति सौभाग्यवलनैः ।
वशीकारैश्चन्द्रावलिमुख-नवीनव्रजसतीः
क्षिपत्याराद्या तां हरिदयितराधां भज मनः ॥१०॥

समं श्रीरूपेण स्मरविवश-राधागिरिभृतो-
र्व्रजे साक्षात्-सेवालभन-विधये तद्गणयुजोः ।
तदिज्याख्या-ध्यान-श्रवण-नति-पंचामृतमिदं
धयन्नीत्या गोवर्धनमनुदिनं त्वं भज मनः ॥११॥

मनःशिक्षादैकादशक-वरमेतन्मधुरया
गिरा गायत्युच्चैः समधिगत-सर्वार्थतति यः ।
सयूथः श्रीरूपानुग इह भवन् गोकुलवने
जनो राधाकृष्णातुलभजनरत्नं स लभते ॥१२॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीमनःशिक्षाख्यमेकादशकं संपूर्णम् ।

# श्रीस्वनियमदशकम् ।

गुरौ मंत्रे नाम्नि प्रभुवर-शचीगर्भजपदे
स्वरूपे श्रीरूपे गणयुजि तदीय-प्रथमजे ।
गिरीन्द्रे गान्धर्वासरसि मधुपुर्यां व्रजवने
व्रजे भक्ते गोष्ठालयिषु परमास्तां मम रतिः ॥ १ ॥

न चान्यत्र क्षेत्रे हरितनु-सनाथेऽपि सुजना-
द्रसास्वादं प्रेम्णा दधदपि वसामि क्षणमपि ।
समं त्वेतद् ग्राम्यावलिभिरभितन्वन्नपि कथां
विधास्ये संवासं व्रजभुवन एव प्रतिभवम् ॥ २ ॥

सदा राधाकृष्णोच्छलदतुल-खेलास्थलयुजं
व्रजं संत्यज्यैतद्युगविरहितोऽपि त्रुटिमपि ।
पुनर्द्वारावत्यां यदुपतिमपि प्रौढविभवैः
स्फुरन्तं तद्वाचापि च न हि चलामीक्षितुमपि ॥ ३ ॥

गतोन्मादै राधा स्फुरति हरिणा श्लिष्टहृदया
स्फुटं द्वारावत्यामिति यदि शृणोमि श्रुतितटे ।
तदाहं तत्रैवोद्धतमति पतामि व्रजपुरात्
समुड्डीय स्वान्ताधिकगति-खगेन्द्रादपि जवात् ॥ ४ ॥

अनादिः सादिर्वा पटुरतिमृदुर्वा प्रतिपद्-
प्रमीलत्-कारुण्यः प्रगुणकरुणाहीन इति वा ।
महावैकुण्ठेशाधिक इह नरो वा व्रजपते-
रयं सूनुर्गोष्ठे प्रतिजनि ममास्तां प्रभुवरः ॥ ५ ॥

अनादृत्योद्गीतामपि मुनिगणैर्वैणिकमुखैः
प्रवीणां गान्धर्वामपि च निगमैस्तत् प्रियतमाम् ।
य एकं गोविन्दं भजति कपटी दांभिकतया
तदभ्यर्णे शीर्णे क्षणमपि न यामि व्रतमिदम् ॥ ६ ॥

अजाण्डे राधेतिस्फुरदभिधया सिक्त-जनया-
ऽनया साकं कृष्णं भजति य इह प्रेम-नमितः ।
परं प्रक्षाल्यैतच्चरणकमले तज्जलमहो
मुदा पीत्वा शश्वच्छिरसि च वहामि प्रतिदिनम् ॥ ७ ॥

परित्यक्तः प्रेयोजन-समुदयैर्बाढमसुधी-
र्दुरन्धो नीरन्ध्रं कदनभरवार्धौ निपतितः ।
तृणं दन्तैर्दष्ट्वा चटुभिरभियाचेऽद्य कृपया
स्वयं श्रीगान्धर्वा स्वपदनलिनान्तं नयतु माम् ॥ ८ ॥

व्रजोत्पन्नक्षीराशन-वसन-पात्रादिभिरहं
पदार्थैर्निर्वाह्य व्यवहृतिमदंभं सनियमः ।
वसामीशाकुण्डे गिरिकुलवरे चैव समये
मरिष्ये तु प्रेष्ठे सरसि खलु जीवादि-पुरतः ॥ ९ ॥

स्फुरल्लक्ष्मीलक्ष्मीव्रजविजयिलक्ष्मीभरलस-
द्वपुः-श्रीगान्धर्वा-स्मरनिकरदीव्यद्गिरिभृतोः ।
विधास्ये कुंजादौ विविध-वरिवस्याः सरभसं
रहः श्रीरूपाख्य-प्रियतम-जनस्यैव चरमः ॥१०॥

कृतं केनाप्येतन्निजनियमशंसि-स्तवमिमं
पठेद् यो विश्रद्धः प्रिययुगलरूपेऽर्पितमनाः ।
दृढं गोष्ठे हृष्टो वसति-वसतिं प्राप्य समये
मुदा राधाकृष्णौ भजति स हि तेनैव सहितः ॥११॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीस्वनियमदशकं संपूर्णम् ।

## श्रीस्वनियमद्वादशकम् ।

गुरौ श्रीगौरांगे तदुदितसुभक्तिप्रकरणे
शचीसूनोर्लीलाविकसितसुतीर्थे निजमनौ ।
हरेर्नाम्नि प्रेष्ठे हरितिथिषु रूपानुगजने
शुकप्रोक्ते शास्त्रे प्रतिजनि ममास्तां खलु रतिः ॥ १ ॥

सदा वृन्दारण्ये मधुररसधन्ये रसमयः
परां शक्तिं राधां परमरसमूर्तिं रमयति ।
स चैवायं कृष्णो निजभजनमुद्रामुपदिशन्
शचीसूनुर्गौडे प्रतिजनि ममास्तां प्रभुवरः ॥ २ ॥

न वैराग्यं ग्राह्यं भवति न हि यद् भक्तिजनितं
तथा ज्ञानं भानं चिति यदि विशेषं न मनुते ।
स्पृहा मे नाष्टांगे हरिभजनसौख्यं न हि यत-
स्ततो राधाकृष्णप्रचुरपरिचर्या भवतु मे ॥ ३ ॥

कुटीरेऽपि क्षुद्रे व्रजभजनयोग्ये तरुतले
शचीसूनोस्तीर्थे भवतु नितरां मे निवसतिः ।
न चान्यत्र क्षेत्रे विबुधगणसेव्ये पुलकितो
वसामि प्रासादे विपुलधनराज्यान्वित इह ॥ ४ ॥

न वर्णे सक्तिर्मे न खलु ममता ह्याश्रमविधौ
न धर्मे नाधर्मे मम रतिरिहास्ते क्वचिदपि ।
परं तत्तद्धर्मे मम जडशरीरं धृतमिद-
मतो धर्मान् सर्वान् सुभजनसहायानभिलषे ॥ ५ ॥

सुदैन्यं सारल्यं सकलसहनं मानददनं
दयां स्वीकृत्य श्रीहरिचरणसेवा मम तपः ।
सदाचारोऽसौ मे प्रभुपदपरैर्यः समुदितः
प्रभोश्चैतन्यस्याक्षयचरितपीयूषकृतिषु ॥ ६ ॥

न वैकुण्ठे राज्ये न च विषयकार्ये मम रति-
र्न निर्वाणे मोक्षे मम मतिरिहास्ते क्षणमपि ।
व्रजानन्दादन्यद्धरिविलसितं पावनमपि
कथञ्चिन्मां राधान्वयविरहितं नो सुखयति ॥ ७ ॥

न मे पत्नी-कन्या-तनय-जननी-बन्धुनिचया
हरौ भक्ते भक्तौ न खलु यदि तेषां सुममता ।
अभक्तानामन्नग्रहणमपि दोषो विषयिणां
कथं तेषां संगाद्धरिभजनसिद्धिर्भवति मे ॥ ८ ॥

असत्तर्कैरन्धान् जडसुखपरान् कृष्णविमुखान्
कुनिर्वाणासक्तान् सततमतिदूरे परिहरन् ।
अराधं गोविन्दं भजति नितरां दांभिकतया
तदभ्यासे किन्तु क्षणमपि न यामि व्रतमिदम् ॥ ९ ॥

प्रसादान्नक्षीराशनवसनपात्रादिभिरहं
पदार्थैर्निर्वाह्य व्यवहृतिमसंगः कुविषये ।
वसन्नीशाक्षेत्रे युगलभजनानन्दितमना-
स्तनुं मोक्ष्ये काले युगपदपराणां पदतले ॥१०॥

शचीसूनोराज्ञाग्रहणचतुरो यो व्रजवने
पराराध्यां राधां भजति नितरां कृष्णरसिकाम् ।
अहं त्वेतत्पादामृतमनुदिनं नैष्ठिकमना
वहेयं वै पीत्वा शिरसि च मुदा सन्नतियुतः ॥११॥

हरेर्दास्यं धर्मो मम तु चिरकालं प्रकृतितो
महामायायोगादभिनिपतितः दुःखजलधौ ।
इतो यास्याम्यूर्ध्वं स्वनियमसुरत्या प्रतिदिनं
सहायो मे मात्रं वितथदलनी वैष्णवकृपा ॥१२॥

कृतं केनाप्येतत् स्वभजनविधौ स्वं नियमकं
पठेद् यो विश्रद्धः प्रिययुगलरूपेऽर्पितमनाः ।
व्रजे राधाकृष्णौ भजति किल संप्राप्य निलयं
स्वमंजर्याः पश्चाद् विविधवरिवस्यां स कुरुते ॥१३॥

इति श्रीमत् सच्चिदानन्दभक्तिविनोदठक्कुरविरचितं
श्रीस्वनियमद्वादशकं संपूर्णम् ।

## श्रीस्वसंकल्पप्रकाशस्तोत्रम् ।

अनाराध्य राधापदांभोजरेणु-
मनाश्रित्य वृन्दाटवीं तत्पदाङ्काम् ।
असंभाष्य तद्भाव-गंभीरचित्तान्
कुतः श्यामसिन्धो रसस्यावगाहः ? १ ॥

नवं दिव्यं काव्यं स्वकृतमतुलं नाटककुलं
प्रहेलीगूढार्थाः सखि रुचिर-वीणाध्वनिगतीः ।
कदा स्नेहोल्लासैर्ललित-ललिता-प्रेरणबलात्
सलज्जं गान्धर्वा सरसमसकृच्छिक्षयति माम् ? २ ॥

अलंमानग्रन्थैर्निभृत-चटु मोक्षाय निभृतं
मुकुन्दे हा हेति प्रथयति नितान्तं मयि जने ।
तदर्थं गान्धर्वाचरण-पतितं प्रेक्ष्य कुटिलं
कदा प्रेमक्रौर्यात् प्रखर-ललिता भर्त्सयति माम् ? ३ ॥

मुदा वैदग्ध्यान्तर्ललित-नवकर्पूर-मिलन-
स्फुरन्नाना-नर्मोत्कर-मधुर-माध्वीकरचने ।
सगर्वं गान्धर्वा-गिरिधरकृते प्रेमविवशा
विशाखा मे शिक्षां वितरतु गुरुस्तद्युगसखी ॥ ४ ॥

कुहूकण्ठीकण्ठादपि कमनकण्ठी मयि पुन-
र्विशाखा गानस्यापि च रुचिर-शिक्षां प्रणयतु ।
यथाहं तेनैतद्युवयुगलमुल्लास्य सगणा-
ल्लभे रासे तस्मान्मणिपदक-हारानिह मुहुः ॥ ५ ॥

क्वचित् कुंजे कुंजे छलमिलित-गोपालमनु तां
मदीशां मध्याह्ने प्रियतर-सखीवृन्दवलिताम् ।
सुधाजैत्रैरन्नैः पचनरसविच्चम्पकलता-
कृतोद्यच्छिक्षोऽयं जन इह कदा भोजयति भोः ? ६ ॥

क्वचित् कुञ्जक्षेत्रे स्मर-विषमसंग्राम-गरिम-
क्षरच्चित्रश्रेणीं व्रजयुवयुगस्योत्कटमदैः ।
विधत्तो सोल्लासं पुनरलमयं पर्णकचयै-
र्विचित्रं चित्रातः सखि कलितशिक्षोऽप्यनु जनः ॥ ७ ॥

परं तुङ्गाद्या यौवतसदसि विद्याद्भुत-गुणैः
स्फुटं जित्वा पद्माप्रभृति-नवनारीर्भ्रमति या ।
जनोऽयं संपाद्यः सखि विविध-विद्यास्पदतया
तया किं श्रीनाथाच्छलनिहित-नेत्रेङ्गित-लवैः ? ८ ॥

स्फुरन्मुक्ता-गुञ्जामणि-सुमनसां हाररचने
मुदेन्दोर्लेखा मे रचयतु तथा शिक्षणविधिम् ।
यथा तैः संक्लृप्तैर्दयितसरसीमध्यसदने
स्फुटं राधाकृष्णावयमपि जनो भूषयति तौ ॥ ९ ॥

अये पूर्वं रंगेत्यमृतमय-वर्णद्वय-रस-
स्फुरद्देवी-प्राप्यं नटन-पटलं शिक्षयति चेत् ।
तदा रासे द्रश्यं रसवलितलास्यं विदधतो-
स्तयोर्वक्त्रे युञ्जे नटनपटु वीटिं सखि मुहुः ॥१०॥

सदक्षक्रीडानां विधिमिह तथा शिक्षयतु सा
सुदेवी मे दिव्यं सदसि सुद्दशां गोकुलभुवाम् ।
तयोर्द्वन्द्वे खेलामथ विदधतोः स्फूर्जति यथा
करोमि श्रीनाथां सखि विजयिनीं नेत्रकथनैः ॥११॥

रहः कीरद्वाराप्यतिविषमगूढार्थरचनं
दले पाद्मे पद्यं प्रहितमुदयच्चाटु-हरिणा ।
समग्रं विज्ञायाचलपति-वलत्कन्दरपदे
तदभ्यर्णे नेष्ये द्रुतमति मदीशां निशि कदा ? १२॥

अदभ्रं बिभ्राणौ स्मररणभरं कन्दरखले
मिथो जेतुं विद्वावपि निशित-नेत्राञ्चलशरैः ।
अपि क्लिद्यद्गात्रौ नखदशन-शस्त्रैरपि दरा
त्यजन्तौ द्रष्टुं तौ किमु तमसि वत्स्यामि समये ?१३॥

समानं निर्वाह्य स्मर-सदसि संग्राममतुलं
तदाज्ञातः स्थित्वा मिलिततनु निद्रां गतवतोः ।
तयोर्युग्मं युक्त्या त्वरितमभिसङ्क्रम्य कुतुकात्
कदाहं सेविष्ये सखि कुसुमपुञ्जव्यजनभाक् ? १४॥

मुदा कुंजे गुञ्जद्भ्रमरनिकरे पुष्पशयनं
विधायारान्माला–घुसृण–मधुवीटीविरचनम् ।
पुनः कर्तुं तस्मिन् स्मरविलसितान्युत्कमनसो–
स्तयोस्तोषायालं विधुमुखि विधास्यामि किमहम् ?१५॥

जितोन्मीलन्नीलोत्पलरुचिनि कान्त्योरसि हरे–
र्निकुंजे निद्राणां द्युतिविजित–गांगेयगुरुताम् ।
कदा दृष्ट्वा राधां नभसि नवमेघे स्थिरतया
वलद्विद्युल्लक्ष्म्यां मुहुरिह दधे थुत्कृतिमहम् ? १६॥

विलासे विस्मृत्य स्खलितमुरुरंगैर्मणिसरं
द्रुतं भीत्यागत्य प्रियतम–सखी–संसदि ह्रिया ।
तमानेतुं स्मित्वा तदविदितनेत्रान्त–नटनैः
कदा श्रीमन्नाथा स्वजनमचिरात् प्रेरयति माम् ? १७॥

क्वचित् पद्मा-शैव्यादिक-वलित–चन्द्रावलिमुरु-
प्रियालापोल्लासैरतुलमपि धिन्वन्नघहरः ।
कदा वा मत्प्रेक्षालवकलित–वैलक्ष्यभरतः
क्व राधेत्याजल्पन्मलिनयति सर्वाः परमिमाः ? १८॥

सगर्वाः संरुद्धय प्रखरललिताद्याः सहचरी–
स्ततो दानं दर्पात् सखि मृगयता स्वं गिरिभृता ।
विशाखा मन्नाथानयननटनप्रेरणबला–
द्विधृत्यारान्नीता रुषमिह दधाना क्षिपतु नः ॥१९॥

स्तनौ शैलप्रायावपि तव नितम्बो रथसमः
स्फुटं जीर्णा नौर्मे कलय तटिनीं वातविषमाम् ।
कथं पारं गच्छेरिह निवस रात्राविति हरे–
र्वचः श्रुत्वा राधा कपट–कुपिता स्मेरयतु माम् ॥२०॥

इदं स्वान्ते भुंजे कदलमपि यद्रङ्गणलता-
　भिधैक-स्वर्वल्लीपवन-लभनेनैव　फलितम् ।
तदभ्यासे स्फूर्जन्मदनसुभगं तद् युवयुगं
　भजिष्ये सोल्लासं प्रियजनगणैरित्थमिह किम् ? २१॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीस्वसंकल्पप्रकाशस्तोत्रं संपूर्णम् ।

# श्रीप्रार्थनामृतस्तोत्रम् ।

श्रीरूपरतिमञ्जर्योरंघ्रिसेवैकगृध्नुना　।
असंख्येनापि जनुषा व्रजे वासोऽस्तु मेऽनिशम् ॥ १ ॥

अयं जीवो रंगैर्नयनयुगलस्यन्दि-सलिल-
　प्रधौताङ्गो रंगे घटितपटु-रोमालिनटनः ।
कदा रासे लास्यैः श्रमजल-परिक्लिन्न-पुलक-
　श्रियौ राधाकृष्णौ मदनसुनटौ वीजयति भोः ॥ २ ॥

प्रेमोद्रेकैर्नयननिपतद्वारिधारो धरण्यां
　वैवर्ण्याली-सवलितवपुः प्रौढकम्पः कदाहम् ।
स्वेदाम्भोभिः स्नपित-पुलकश्रेणिमूलः स्मितोक्तौ
　राधाकृष्णौ मदनसमर-स्फारदक्षौ स्मरामि ॥ ३ ॥

मसार-क्ष्मासारोद्भव-नवतमालोद्भट-मद-
　प्रहारि-श्रीभारोज्ज्वलवपुषमुद्यच्छुचिरसैः　।
कदा राकाचन्द्र-स्तुतवदन-निद्रालसदृशं
　दृशा कृष्णं वक्षःस्वपनपरराधं सखि भजे ॥ ४ ॥

सरागं कुर्वत्याः सखि हरिकृते हाररचनं
करे श्रीराधायाः प्रकटपुलकोद्रेकि मयका ।
विचित्यालं चञ्चद्द्युति-विविधवर्णं मणिकुलं
क्रमेणाराद्धेयं किमिति कृपया तच्चरणयोः ? ५ ॥

मानेनालं कवलितधिया श्यामया राधिकार्द्रा
द्रागाहूता व्यसन-कथनायेति संविद्य कीरात् ।
तस्या वेशैर्गतमघहरं तस्य दोषं लपन्तं
तुष्ट्याऽलिङ्ग्य त्वरितमथ सा ज्ञाततत्त्वा जडासीत्॥ ६ ॥

सनीरमुदिरद्युतिः पुरटनिन्दि-वस्त्रं दध-
च्छिखण्डकृतशेखरः स्फुरितवन्यवेशः सुखी ।
समृद्ध-विधुमण्डलीस्तवनलंघिवक्त्रे धृतां
क एष सखि वादयन् मुरलिमद्य बुद्धिं हरेत् ? ७ ॥

एकं स्वप्नवरं शृणुष्व ललिते हा हा सखि श्रावय
स्वप्ने पुष्पहृतौ त्वया सह मया प्राप्ते वने मत्पुरः ।
तन्वत्या दरवीक्ष्य चञ्चल-दृशाऽनङ्गं सदङ्गं बलात्
स्मेरः कश्चन मेघसुन्दरवपुस्त्वामालिलिंगोन्मदः ॥ ८ ॥

दृष्ट्वा गोपतिनन्दनस्य कदनं वेणुर्गतो मूकतां
सर्वे स्थावरजङ्गमा व्रजवनीजाता ययुः क्षीणताम् ।
सोऽपि व्यग्रसुहृद्वृतो भुवि लुठन्नास्ते विभूषः कृशो
राधे त्वं तु मुदा सदाधिपयसा मानोरगं पोषय ॥ ९ ॥

क्व राधे त्वं साक्षादित इतवती त्वद्दशमिमं
जनं हा हाऽऽगत्य स्नपय कृपया कौतुकरसैः ।
इति व्यग्रं शश्वन्मुरलि-विवरे घर्घररवं
वितन्वाने कृष्णे स्मितवलित-वामेयमुदभुत् ॥१०॥

कृत्वा वामकरेऽद्य कामु कमये पौष्पं करस्यापर-
स्याभुग्नांगुलि-युग्मकेन सरलं न्यस्येषुमस्मिन् पुरः ।
कः श्यामो नटवेश एष सुहृदां संगेन रंगं सृजन्
स्मेरः सुन्दरि बंभ्रमीति मदनस्योन्मादि-दृग्विभ्रमः ?११॥

श्यामाश्याम-निकाम-कामसमरोज्जृम्भच्च्युतालंकृति-
स्तोमामोदित-माल्यकुंकुमहिमव्याकीर्णकुंजं मुदा ।
दृष्ट्वागत्य सखि श्रमेण पवनं दूरे भजत्तद्युगं
द्रष्टुं न्यस्तदृशौ कदापि मयि तत् स्मेरां दृशं धास्यति ?

सुबलसखाधरपल्लव-समुदित-मधुमाधुरीलुब्धाम् ।
रुचिजितकाञ्चनचित्रां काञ्चनचित्रां पिकीं वन्दे ॥१३॥

वृषरविजाधरबिम्बी-फलरसपानोत्कमद्भुतं भ्रमरम् ।
कृतशिखिपिञ्छकचूलं पीतदुकूलं चिरं नौमि ॥१४॥

जितः सुधांशुर्यशसा ममेति
गर्वं परं मा कुरु गोष्ठवीर ।
तवारि-नारी-नयनाम्बुपाली
जिगाय तातं सततं यतोऽस्य ॥१५॥

अदृष्टा दृष्टेव स्फुरति सखि केयं पुरवधूः
कुतोऽस्मिन्नायाता भजितुमतुला त्वां मधुपुरात् ।
अपूर्वेणापूर्वां रमय हरिणैनामिति स रा-
धिकोद्यद्भंग्युक्त्या विदित-युवतिभ्यः स्मितमधात् ॥१६॥

त्वद्भाग्यादिन्दुकान्तिर्वनमणि-सदनं मण्डयन्ती समन्ताद्-
भ्राजत्यस्मिन् वसन्ती हतमपि तिमिरं मध्यरात्रं च वीतम्
तूर्णं तस्माच्चकोर व्रज निजगगणात् सेवितुं तां पिपासो
यावत् सूरोऽभिमन्युर्द्रुतमिह उदितस्त्वां न दूरीकरोति॥१७

चकोरीव ज्योत्स्नायुतममृतरश्मिं स्थिरतडिद्-
वृतं दिव्यांभोदं नवमिव रटच्चातकवधूः ।
तमालं भृङ्गीवोद्यतरुचि कदा स्वर्णलतिका-
श्रितं राधाश्लिष्टं हरिमिह दृगेषा भजति मे ? १८॥

दूतीभिश्चटुवारिभिः सखिगणैर्भेदार्द्रशाखाहति-
व्रातैः पादलुठच्छिरःश्रितरजोवृष्ट्या बकीविद्विषा ।
राधायाः सखि शक्यते शमयितुं यो मानवह्निर्न या
तं निर्वापयतीह फूत्कृतिकणैस्तां सिद्धवंशीं नुमः ॥१९॥

'प्राणक्ष्वेलिभुवं व्रजं व्रजजनं तातं प्रसूं गाः सखीन्
गोपीः कामपि तां विना विषमभूद्द्वारावती मित्र मे' ।
इत्थं स्वाप्निकशीर्णमाधववचः श्रुत्वैव भामापि सा
तद्युक्ता किल लोकितुं तदखिलं तं चाटुना याचते॥२०॥

तमालस्य क्रोडे स्थितकनकयूथीं प्रविलसत्-
प्रसूनां लोलालिं सखि कलय वन्द्यां चिरमिमाम् ।
तिरस्कर्तुं मेघद्युतिमघभिदोऽङ्के स्थित-चलद्-
दृशं स्मेरां राधां तडिदतिरुचिं स्मारयति या ॥२१॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीप्रार्थनामृतस्तोत्रं संपूर्णम् ।

## श्रीअभीष्टप्रार्थनाष्टकम् ।

कदा गोष्ठे गोष्ठक्षितिप-गृहदेव्या किल तया
सबाष्पं कुर्वत्या विलसति सुते लालनविधिम् ।
मुहुर्दृष्टां रोहिण्यपिहितनिवेशामवनतां
निषेवे ताम्बूलैरहमपि विशाखा-प्रियसखीम् ॥ १ ॥

कदा गान्धर्वायां शुचि विरचयन्त्यां हरिकृते
मुदा हारान् वृन्दैः सह सवयसामात्मसदने ।
विचित्य श्रीहस्ते मणिमिह मुहुः संपुटचया-
दहो विन्यस्यन्तो सफलयति सेयं भुजलताम् ॥ २ ॥

कदा लीलाराज्ये व्रजविपिनरूपे विजयिनी
निजं भाग्यं साक्षादिह विदधती वल्लभतया ।
समन्तात् क्रीडन्ती पिक-मधुप-मुख्याभिरभितः
प्रजाभिः संजुष्टा प्रमदयति सा मां मदधिपा ॥ ३ ॥

कदा कृष्णातीरे त्रिचतुर-सखीभिः सममहो
प्रसूनं गुंफन्तीं रविसखसुतामानततया ।
समेत्य प्रच्छन्नं सपदि परिरिप्सोर्बकरिपो-
र्निषेधे भ्रूभङ्गां भृशमनुभजेऽहं व्यजनिनी ॥ ४ ॥

कदा शुभ्रे तस्मिन् पुलिनवलये रासमहसा
सुवर्णाङ्गी-संघेष्वहमहमिका-मत्तमतिषु ।
हरौ याते नीलोपलनिकषतां जित्वरगुणाद्-
गुणादस्मान् दिव्यद्रविणमिव राधा मदयति ॥ ५ ॥

कदा भाण्डीरस्य प्रथितरुचिरोत्सङ्गनिलये
वरामध्यासीनां कुसुममयतूलीमतुलिताम् ।
प्रिये चित्रं पत्रं लिखति निहितस्वाङ्ग-लतिकां
विशाखाप्राणालीं भजति दिशती वर्णकमसौ ॥ ६ ॥

कदा तुंगे तुंगे रहसि गिरिशृंगे व्रततिजान्
प्रिये पूर्वा लीला निगमयति संस्ताव्य निलयान् ।
मदेनाविस्पष्टां शकलितपदां व्रीडिततया
द्रुतामौत्क्येनैषा विरचयति पृच्छां मम पुरः ॥ ७ ॥

गतिर्यन्मे नित्या यदखिलमपि स्वं सवयसां
मदीश्वर्याः प्रेष्ठ-प्रणयकृत-सौभाग्य-वरिमा।
हरेर्यत् प्रेमश्रीर्निवसतिरमुष्यास्तुलनया
सदा तस्मिन् कुण्डे लसतु ललितालो मम हृशि॥ ८॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीअभीष्टप्रार्थनाष्टकं संपूर्णम्।

# श्रीप्रार्थनाश्रयचतुर्दशकम्।

अलं दीपावल्यां विपुलरतिगोवर्धन-गिरिं
जनन्या संपूज्योज्ज्वलित-महिलोद्गीतकुतुकैः।
निशाद्रावैः पृष्ठे रचित-करलक्ष्मश्रियमसौ
वहन् मेघध्वानैः कलय गिरिभृत् खेलयति गाः॥ १॥

पुरो गोभिः सार्धं व्रजनृपतिमुख्या व्रजजना
व्रजन्त्येषां पश्चान्निखिल-महिलाभिर्व्रजनृपाः।
ततो मित्रव्रातैः कृतविविध-नर्म व्रजशशी
छलैः पश्यन् राधां सहचरि परिक्रामति गिरिम्॥ २॥

उदञ्चत्-कारुण्यामृतवितरणैर्जीवित-जगद्-
युवद्वन्द्वं गन्धैर्गुणसुमनसां वासितजनम्।
कृपाञ्चन्मय्येवं किरति न तदा त्वं कुरु तथा
यथा मे श्रीकुण्डे सखि सकलमङ्गं निवसति॥ ३॥

उद्दामनर्म-रसकेलि-विनिर्मितांगं
राधामुकुन्द-युगलं ललिता-विशाखे।
गौरांगचन्द्रमिह रूपयुगं न पश्यन्
हा वेदनाः कति सहे स्फुट रे ललाट॥ ४॥

व्रजपति-कृत-पर्वानन्दि-नन्दीश्वरोद्यत्-
परिषदि वदनान्तःस्मेरतां राधिकायाः ।
रचयति हरिराराद्दृग्विभंगेन नव्यां
रविरिव कमलिन्याः पुष्पकान्तिं करेण ॥ ५ ॥

उपरिगिरि गिरिधर्तुः सुस्मिते वक्त्रबिम्बे
भ्रमति निभृत-राधा नेत्रभङ्गीच्छलेन ।
अतितृषित-चकोरी-लालसेवाम्बुदस्यो-
परि शशिनि सुधाढ्ये मध्य आकाशदेशम् ॥ ६ ॥

द्युतिजित-रति-गौरी-क्ष्मा-रमा-सत्यभामा-
व्रजपुर-वरनारीवृन्द-चन्द्रावलीकाम् ।
गिरिभृत इह राधां तन्वतो मण्डितां त-
त्तदुपकरणमग्रे किं निधास्ये क्रमेण ? ७ ॥

कनकरचित-कुम्भद्वन्द्व-विन्यासभङ्गी-
रुचिहर-कुचयुग्मं सौरभोच्छूनमस्याः ।
सपुलकमथ गन्धैश्चित्रितं कर्तुमिच्छो-
र्गिरिभृत इह हस्ते हन्त दास्ये कदा तान ? ८ ॥

कृष्णस्यांसे विनिहितभुजावल्लिरुत्फुल्लरोमा
रामा केयं कलयतितरां भूधरारण्य-लक्ष्मीम् ।
ज्ञातं ज्ञातं प्रणय-चटुला व्याकुला रागपूरै-
रन्या कास्ते सहचरि विना राधिकामीदृशी वा ? ९ ॥

अपूर्व-प्रेमाब्धेः परिमलपयः-फेननिवहैः
सदा यो जीवातुर्यमिह कृपयासिञ्चदतुलम् ।
इदानीं दुर्दैवात् प्रतिपदविपद्दावविलितो
निरालम्बः सोऽयं कमिह तमृते यातु शरणम् ? १०॥

शून्यायते महागोष्ठं गिरीन्द्रोऽजगरायते ।
व्याघ्रतुण्डायते कुण्डं जीवातुरहितस्य मे ॥११॥

न पतित यदि देहस्तेन किं तस्य दोषः
स किल कुलिशसारैर्यद्विधात्रा व्यधायि ।
अयमपि परहेतुर्गाढतर्केण दृष्टः
प्रकटकदनभारं को वहत्वन्यथा वा ? १२॥

गिरिवरतट-कुंजे मंजु-वृन्दावनेशा-
सरसि च रचयन् श्रीराधिका-कृष्ण-कीर्तिम् ।
धृतरति रमणोयं संस्मरंस्तत्पदाब्जं
व्रज-दधि-फलमश्नन् सर्वकालं वसामि ॥१३॥

वसतो गिरिवरकुंजे लपतः श्रीराधिकेऽनु कृष्णेति ।
धयतो व्रज-दधितक्रं नाथ सदा मे दिनानि गच्छन्तु ॥१४॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीप्रार्थनाश्रयचतुर्दशकं संपूर्णम् ।

# श्रीअभीष्टसूचनम् ।

आभीरपल्लीपतिपुत्र-कान्ता-
दास्याभिलाषातिबलाश्ववारः ।
श्रीरूपचिन्तामणिसाप्ति-संस्थो
मत्स्वान्त-दुर्दान्त-हयेच्छुरास्ताम् ॥ १ ॥

यद्यत्नतः शम-दमात्मविवेकयोगै-
रध्यात्मलग्नमविकारमभून्मनो मे ।
रूपस्य तत् स्मितसुधं सदयावलोक-
मासाद्य माद्यति हरेश्चरितैरिदानीम् ॥ २ ॥

निभृत-विपिनलीलाः कृष्णवक्त्रं सदाक्ष्णा
प्रपिबथ मृगकन्या यूयमेवातिधन्याः ।
क्षणमपि न विलोके सारमेयी व्रजस्था-
प्युदरभरणवृत्त्या बंभ्रमन्ती हताऽहम् ॥ ३ ॥

मन्मानसोन्मीलदनेक-सङ्गम-
प्रयास-कुंजोदरलब्ध-सङ्गयोः ।
निवेद्य सख्यर्पय मां स्वसेवने
वीटीप्रदानावसरे व्रजेशयोः ॥ ४ ॥

निबिड-रतिविलासायासगाढालसाङ्गीं
श्रमजलकणिकाभिः क्लिन्नगण्डां नु राधाम् ।
व्रजपतिसुतवक्षःपीठविन्यस्त-देहा-
मपि सखि भवतीभिः सेव्यमानां विलोके ॥ ५ ॥

दितिजकुलनितान्तध्वान्तमश्रान्तमस्यन्
स्वजनजनचकोरप्रेमपीयूषवर्षी ।
कर-शिशिरित-राधा-कैरवोत्फुल्लवल्ली-
कुचकुसुमगुलुच्छः पातु कृष्णौषधीशः ॥ ६ ॥

रासे लास्यं रसवति समं राधया माधवस्य
क्ष्माभृत्कच्छे दधिकर-कृते स्फारकेली-विवादम् ।
आलीमध्ये स्मरपवनजं नर्मभङ्गी-तरंगं
काले कस्मिन् कुशलभरिते हन्त साक्षात् करोमि ? ७ ॥

रोहिण्याग्रे कृताशीःशतमथ सभयानन्दमाभीरभर्ता
भीत्या शश्वन्नृसिंहे हलिनि सखिकुले न्यस्य सास्रं व्रजेश्या ।
साटोप-स्नेहमुद्यद्व्रजजन-निवहै राधिकादिप्रियाभिः
सश्लाघं वीक्ष्यमाणः श्रितसुरभिरटन्नव्यगोपः स पायात् ॥ ८ ॥

अदृष्टा दृष्टेव स्फुरति सखि केयं व्रजवधूः
कुतोऽस्मिन्नायाता भजितुमतुला त्वां मधुपुरात् ।
अपूर्वेणापूर्वां रमय हरिणैनामिति स रा-
धिकोद्यद्भङ्ग्युक्त्या विदित-युवतिभ्यः स्मितमधात्॥ ९ ॥

राधेति नाम नवसुन्दर-सीधु मुग्धं
कृष्णेति नाम मधुराद्भुत-गाढदुग्धम् ।
सर्वक्षणं सुरभिराग-हिमेन रम्यं
कृत्वा तदेव पिब मे रसने क्षुधार्ते ॥१०॥

चैतन्यचन्द्र मम हृत्कुमुदं विकाश्य
हृद्यं विधेहि निज-चिन्तन-भृङ्गरंगैः ।
किञ्चापराध-तिमिरं निबिडं विधूय
पादामृतं सदय पायय दुर्गतं माम् ॥११॥

पिकपटु-रववाद्यैर्भृङ्गझङ्कार-गानैः
स्फुरदतुल-कुडुङ्ग-क्रोडरंगे सरङ्गम् ।
स्मरसदसि कृतोद्यन्नृत्यतः श्रान्त-गात्रं
व्रजनवयुव-युग्मं नर्तकं वीजयामि ॥१२॥

यत्पादाम्बुज-युग्म-विच्युतरजः-सेवाप्रभावादहं
गान्धर्वा-सरसी-गिरीन्द्र-निकटे कष्टोऽपि नित्यं वसन् ।
तत्प्रेयोगणपालितो जितसुधा राधामुकुन्दाभिधा
उद्गायामि शृणोमि मां पुनरहो श्रीमान् स रूपोऽवतु ॥१३॥

इति श्रीमद्रघुनाथदासगोस्वामिविरचित-स्तवावल्यां
श्रीअभीष्टसूचनं संपूर्णम् ।

# श्रीमन्नाम्नोऽनन्यगतिकत्वम् ।

श्रीमहादेव उवाच

नेदं कस्यापि कथितं गोपनीयमिदं मम ।
किंतु वक्ष्यामि ते भद्रे त्वं भक्ता सुप्रियाऽसि मे ॥ १ ॥

पुरा सत्ययुगे देवि विशुद्धमतयोऽखिलाः ।
जपन्ति विष्णुमेवैकं ज्ञात्वा सर्वेश्वरेश्वरम् ॥ २ ॥

प्रयान्ति परमामृद्धिमैहिकामुष्मिकीं प्रिये ।
यां न प्राप्ता सुराः सर्वे ऋषयः क्लेशसंयुताः ॥ ३ ॥

ते तां गतिं प्रपद्यन्ते ये नामकृतनिश्चयाः ।
मन्मुखादपि संश्रुत्य देवा विष्णुबहिर्मुखाः ॥ ४ ॥

वेदैः पुराणैः सिद्धान्तैर्भिन्नैर्विभ्रान्तचेतसः ।
निश्चयं नाधिगच्छन्ति किं तत्त्वं किं परं पदम् ॥ ५ ॥

तुलापुरुषदानाद्यैरश्वमेधादिभिर्मखैः ।
वाराणसीप्रयागादितीर्थस्नानादिभिः प्रिये ॥ ६ ॥

गयाश्राद्धादिभिः पित्र्यैर्वेदपाठादिभिर्जपैः ।
तपोभिरुग्रैर्नियमैर्यमैर्भूतदयादिभिः ॥ ७ ॥

गुरुशुश्रूषणैः सत्यैर्धर्मैर्वर्णाश्रमान्वितैः ।
ज्ञानध्यानादिभिः सम्यक्चरितैर्जन्मकोटिभिः ॥ ८ ॥

न यान्ति तत् परं श्रेयो विष्णुं सर्वेश्वरेश्वरम् ।
सर्वभावैः समाश्रित्य पुराणपुरुषोत्तमम् ॥ ९ ॥

अनन्यगतयो मर्त्या भोगिनोऽपि परन्तपाः ।
ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः ॥१०॥

सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पिनः ।
सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः ॥११॥

स्मर्तव्यः सततं विष्णुर्विस्मर्तव्यो न जातुचित् ।
सर्वे विधिनिषेधाः स्युरेतयोरेव किङ्कराः ॥१२॥

किंतु ब्रह्मादयो देवा ऋषयश्च निरंहसः ।
निर्भयं विष्णुनाम्ना वै यथेष्टं पदमागताः ॥१३॥

[ पद्मपुराणे उत्तरखण्डे श्रीपार्वतीं प्रति श्रीमहादेवोक्तिः । ]

स्वयं नारायणो देवः स्वनाम्नि जगतां गुरुः ।
आत्मनोऽभ्यधिकां शक्तिं स्थापयामास सुव्रताः ॥१४॥

अत्र ये विवदन्ते वा आयासलघुदर्शनात् ।
फलानां गौरवाच्चापि ते यान्ति नरकं बहु ॥१५॥

तस्माद्धरौ भक्तिमान् स्याद्धरिनामपरायणः ।
पूजकं पृष्ठतो रक्षेन्नामिनं वक्षसि प्रभुः ॥१६॥

[ पद्मपुराणे स्वर्गखण्डे ऋषीन् प्रति श्रीसूतोक्तिः । ]

मधुरं मधुरेभ्योऽपि मङ्गलेभ्योऽपि मङ्गलम् ।
पावनं पावनेभ्योऽपि हरेर्नामैव केवलम् ॥१७॥

तृणीकृत्य जगत्सर्वं राजते सकलोपरि ।
चिदानन्दमयं शुद्धं हरेर्नामैव केवलम् ॥१८॥

[ श्रीभगवन्नामाष्टके ]

हरेर्नाम हरेर्नाम हरेर्नामैव केवलम् ।
कलौ नास्त्येव नास्त्येव नास्त्येव गतिरन्यथा ॥१९॥

[ बृहन्नारदीये ]

# श्रीकृष्णनामाष्टकम् ।

निखिलश्रुतिमौलिरत्नमाला-
　　द्युतिनीराजितपादपङ्कजान्त ! ।
अयि मुक्तकुलैरुपास्यमानं
　　परितस्त्वां हरिनाम ! संश्रयामि ॥ १ ॥

जय नामधेय ! मुनिवृन्दगेय ! हे
　　जनरञ्जनाय परमक्षराकृते ।
त्वमनादरादपि मनागुदीरितं
　　निखिलोग्रतापपटलीं विलुम्पसि ॥ २ ॥

यदाभासोऽप्युद्यन्कवलितभवध्वान्तविभवो
　　दृशं तत्त्वान्धानामपि दिशति भक्तिप्रणयिनीम् ।
जनस्तस्योदात्तं जगति भगवन्नामतरणे !
　　कृती ते निर्वक्तुं क इह महिमानं प्रभवति ? ३ ॥

यद्ब्रह्मसाक्षात्कृतिनिष्ठयापि
　　विनाशमायाति विना न भोगैः ।
अपैति नाम ! स्फुरणेन तत्ते
　　प्रारब्धकर्मेति विरौति वेदः ॥ ४ ॥

अघदमनयशोदानन्दनौ ! नन्दसूनो !
　　कमलनयन-गोपीचन्द्र-वृन्दावनेन्द्राः ! ।
प्रणतकरुणकृष्णावित्यनेकस्वरूपे
　　त्वयि मम रतिरुच्चैर्वर्धतां नामधेय ! ॥ ५ ॥

वाच्यं वाचकमित्युदेति भवतो नाम ! स्वरूपद्वयं
पूर्वस्मात्परमेव हन्त करुणं तत्रापि जानीमहे ।
यस्तस्मिन्विहितापराधनिवहः प्राणी समन्ताद्भवे-
दास्येनेदमुपास्य सोऽपि हि सदानन्दाम्बुधौ मज्जति ।

सूदिताश्रितजनार्तिराशये
रम्यचिद्घन-सुखस्वरूपिणे ।
नाम ! गोकुलमहोत्सवाय ते
कृष्ण ! पूर्णवपुषे नमो नमः ॥ ७ ॥

नारदवीणोज्जीवन !
सुधोर्मि-निर्यास-माधुरीपूर ! ।
त्वं कृष्णनाम ! कामं
स्फुर मे रसने रसेन सदा ॥ ८ ॥

इति श्रीमद्रूपगोस्वामिविरचित--स्तवमालायां
श्रीकृष्णनामाष्टकं संपूर्णम् ।

श्रीगुरु-गौराङ्ग-गान्धर्वाहृद्-गोविन्ददेव-प्रीतयेऽस्तु ।